घानतः ॥ आकृष्यकर्णपर्यंतंविशिखेनतताडतं ॥ ९ ॥ विशिखोभ्रामयित्वातंगगनेशतयोजनं ॥ प्रहरार्द्धेनराजेंद्रलंकायांसंन्यप।
तयत् ॥ १० ॥ रक्षोभिःसहतद्युद्धंबभूवघटिकाद्वयम् ॥ न्यपातयत्सरक्षांसिप्रद्युम्नोऽथयदूत्तमः ॥ ११ ॥ नादयन्दुंदुभिंराजन्॥वे
जित्यचगृहेबलिं ॥ दक्षिणांमथुरांदृष्ट्वात्रिकूटंचारुरोहह ॥ १२ ॥ प्रोच्चक्रामत्रिकूटात्समैनाकशिखरोपरि ॥ मैनाकात्सिंहलंचैत्य
भारतंचाययौपुनः ॥ १३ ॥ शनैःशनैर्वानरेंद्रोहिमाचलगिरिंगतः ॥ हिमाचलस्यशिखरात्प्राग्ज्योतिषपुरंययौ ॥ १४ ॥ मह्व॥रवे
शाधिपतिंप्रद्युम्नोयादवेश्वरः ॥ महाक्षेत्रंरामकृष्णंप्रययौसेतुबंधनं ॥ १५ ॥ शतयोजनविस्तीर्णंसमुद्रंमकरालयं ॥ वीक्ष्यका॥र्ष्णि
र्महावीरस्तस्थौवेलांसमेत्यसः ॥ १६ ॥ सांबादीन्ससमाहूयाक्रूराद्यान्यादवान्स्वकान् ॥ सभायामुद्धवंप्राहकार्ष्णिर्यो॥गेश्वरे
श्वरः ॥ १७ ॥ प्रद्युम्नउवाच ॥ विभीषणोद्वीपपतिर्महोज्ज्वलोलंकापतिःकौणपवृंदमुख्यः ॥ वदाथकिंभोजवरा॥यमंत्रिन्न
चेद्बलिंयच्छातिमेतदाशु ॥ १८ ॥ उद्धवउवाच ॥ त्वंदेवदेवःपुरुषोत्तमोत्तमःश्रीकृष्णचंद्रःपरमस्त्वमेवहि ॥ त्वंपृच्छसेल॥ोकइवप्र
भोमांमायापितेयोगिवरैर्दुरत्यया ॥ १९ ॥ ब्रह्मादयोयस्यपरानुशासनंवहंतिमूर्ध्नासततंप्रधर्षिताः ॥ सएवसाक्षात्पुरुषो॥सिभूमन्
दासानुदासोऽस्मिवदामिकिंते ॥२०॥ नारदउवाच ॥ इत्युक्तःपश्यतांतेषांप्रद्युम्नोभगवान्हरिः ॥ पत्रंगृहीत्वाव्यलिखत्संदेशंमैथि
लेश्वर॥२१॥श्रीभोजराजायबलिंप्रयच्छबलान्नचेन्मेवचनंशृणुत्वं ॥ कोदंडमुक्तैर्विशिखैश्चसेतुंबध्वागमिष्यामिससैन्यसंघः॥२२॥
लिखित्वेदंसमादायकोदंडंचंडविक्रमः ॥ बाणेपत्रंसमाधायकर्णांतंततताननह ॥२३॥ प्रस्फुटंस्फोटतेनैवटंकारोभूत्तडित्स्वनः ॥ नना
दतेनब्रह्मांडंसप्तलोकैर्बिलैःसह ॥२४॥ कोदंडमुक्तोविशिखोद्योतयन्मंडलंदिशां ॥ विभीषणसभामध्येसंपपाततडित्स्वनः ॥२५॥
तदैवराक्षसाःसर्वेप्रोत्थिताश्चकिताइव ॥ सकंचुकानिशस्त्राणिजगृहुर्वेगतःखलाः ॥ २६ ॥ पत्रंबाणात्समाकृष्यपठित्वाऽथविभीष
णः ॥ विस्मितोभूत्सभामध्येराक्षसेंद्रोमहाबलः ॥२७॥ प्राप्तंतदैवसदसिशुक्राचार्यंविभीषणः ॥ पूजयामासपाद्याद्यैर्नत्वाप्राहकृतां

वि. ७

ग. सं. जलिः ॥ २८ ॥ बिभीषणउवाच ॥ भगवन्कस्यबाणोयंभोजराजस्तुकःक्षितौ ॥ किंबलंतस्यमेब्रूहित्वंसाक्षाद्दिव्यदर्शनः ॥ २९ ॥
श्रीशुकउवाच ॥ अत्रैवोदाहरंतीममितिहासंपुरातनं ॥ यस्यश्रवणमात्रेणराजन्पापंप्रशाम्यति ॥ ३० ॥ पुराहिब्रह्मणःपुत्राःसनका अ. १३
॥१३॥ द्यादिवंगताः ॥ विष्णोर्लोकंययुर्दिव्यंचरंतोभुवनत्रयं ॥ ३१ ॥ दिगंबरान्शिशून्मत्वाजयोविजयएवतान् ॥ द्वारपालौरुरुधतुर्वेत्रेणां
तःपुरस्थितौ ॥ ३२ ॥ अशपंस्तौचतेक्रुद्धाःकृष्णदर्शनलालसाः ॥ भूयास्तमसुरौदुष्टौशुद्धौहिजन्मभिस्त्रिभिः ॥ ३३ ॥ एवंशप्तौस्वभ
वनात्पततौभूमिमंडले ॥ जज्ञातेतौदितेःपुत्रौदैत्यदानवपूजितौ ॥ ३४ ॥ हिरण्यकशिपुर्ज्येष्ठोहिरण्याक्षोनुजस्तथा ॥ भगवान्यज्ञवा
राहोभूत्वाक्ष्मामुद्धरन्बलात् ॥ ३५ ॥ जघानमुष्टिनादैत्यंहिरण्याक्षंमहाबलं ॥ हिरण्यकशिपुंसाक्षान्नृसिंहश्चंडविक्रमः ॥ ३६ ॥ ददा
रजठरेतंवैकायाधवसहायकृत् ॥ भ्रातरौतौपुनर्जातौकेशिन्यांविश्रवःसुतौ ॥ ३७ ॥ रावणःकुंभकर्णश्चसर्वलोकैकतापनौ ॥ सायकैराघ
वस्यापिपेततुर्युद्धमंडले ॥ ३८ ॥ राक्षसेंद्रौमहावेगौससैन्यौपश्यतस्तव ॥ तृतीयेस्मिन्भवेजातौक्षत्रियाणांकुलेकिल ॥ ३९ ॥ शि
शुपालोदंतवक्रोवर्तमानौमहाबलौ ॥ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयं ॥ ४० ॥ असंख्यब्रह्मांडपतिर्गोलोकेशःपरात्प
रः ॥ जातस्तयोर्वधार्थाययदुवंशेहरिःस्वयं ॥ ४१ ॥ यादवेंद्रोभूरिलीलोद्वारकायांविराजते ॥ युधिष्ठिरमहायज्ञेयुद्धेशाल्वस्यमाध
वः ॥ ४२ ॥ शिशुपालंदंतवक्रंहनिष्यतिनसंशयः ॥ तस्यपुत्रःशंबरारिर्दिग्जयार्थंविनिर्गतः ॥ ४३ ॥ विजेष्यतिनृपान्सर्वाञ्जंबुद्वी
पस्थितान्नृपान् ॥ जितेषुसत्सुदेवेषुद्वारकायांयदूत्तमः ॥ उग्रसेनोभोजराजोराजसूयंकरिष्यति ॥ ४४ ॥ तस्यापिकोदंडविनिर्ग
तोबलात्प्रचंडवेगोविशिखस्त्विहागतः ॥ तन्नामचिह्नोतितडित्स्वनोबभौप्रद्योतयन्राक्षसमंडलंदिशां ॥ ४५ ॥ श्रीनारदउवाच ॥ ॥१३॥
श्रीरामभक्तोथविभीषणोसौविज्ञायकृष्णंनृपरामचंद्रं ॥ नीत्वाबलिंकौणपवृंदमुख्यःसमाययौसुंदरशत्रुसेनां ॥ ४६ ॥ तदावतीर्या
शुमहांबरात्स्फुरद्घनद्युतिर्दीर्घवपुर्जयेक्षणः ॥ प्रदक्षिणीकृत्यहरेःसुतंपुनःकृतांजलिःसंमुखआस्थितोभूत् ॥ ४७ ॥ विभीषणउवाच ॥

नमोभगवतेतुभ्यंवासुदेवायवेधसे ॥ प्रद्युम्नायानिरुद्धायनमःसंकर्षणायच ॥ ४८ ॥ नमोमत्स्यायकूर्मायवराहायनमोनमः ॥
नमःश्रीरामचंद्रायभार्गवायनमोनमः ॥ ४९ ॥ वामनायनमस्तुभ्यंनृसिंहायनमोनमः ॥ नमोबुद्धायशुद्धायकल्कयेचार्तिहारिणे ॥
॥ ५० ॥ नारदउवाच ॥ इत्युक्त्वाश्रीहरेःपुत्रंपूजयामासमानदः ॥ उपचारैःषोडशभिर्भक्त्यापरमयाऽऽर्द्रवाक् ॥५१॥ तस्मैतुष्टः
शंबरारिर्ददौज्ञानंविरक्तिमत् ॥ भक्तिंशांतिकरींसाक्षाद्यांतिदुःप्रेमलक्षणां ॥ ५२ ॥ ब्रह्मदत्तंमहादिव्यंपद्मरागंशिरोमणिं ॥ पौल
स्त्येनपुरादत्तांरत्नमालांस्फुरत्प्रभां ॥ ५३ ॥ चंद्रकांतमणिंतस्मैचंद्रदत्तंददौपुनः ॥ पीतांबरंपरंसाक्षात्प्रद्युम्नःपरमःप्रभुः ॥ ५४ ॥
विभीषणोथप्रद्युम्नंनत्वादत्त्वाबलिंततः ॥ जगामलंकांसगणोराक्षसेंद्रोमहाबलः ॥ ५५ ॥ इतिश्रीमद्गर्गसंहितायांविश्वजित्खंडेना
रदबहुलाश्वसंवादेशाल्वमल्लारलंकाविजयोनामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ श्रीनारदउवाच ॥ ऋषभाद्रिंततोदृष्ट्वाश्रीरंगा
ख्यंहरेःसुतः ॥ कामःकार्ष्णिःपुरींकांचींनदींप्राचींसरिद्वारां ॥ १ ॥ कावेरींचतदोत्तीर्यसह्याद्रिविषयंययौ ॥ यादवैःसहितःसाक्षा
त्प्रद्युम्नोभगवान्हरिः ॥ २ ॥ शिबिरेषुसमायांतंमुक्तकेशंदिगंबरं ॥ अवधूतंप्रधावंतंपुष्टांगंरजसावृतं ॥ ३ ॥ बालास्तमनुधावंत
स्तलशब्दैरितस्ततः ॥ कोलाहलंप्रकुर्वंतोहसंतोमैथिलेश्वर॥४॥तंदृष्ट्वाचोद्धवंप्राहकार्ष्णिर्बुद्धिमतांवरः॥प्रद्युम्नउवाच ॥ कोयंपुष्टव
पुर्वावन्बालोन्मत्तपिशाचवत् ॥ ५ ॥ तिरस्कृतोपिहसतिजनैरानंदवान्महान् ॥ ६ ॥ उद्धवउवाच ॥ अयंपरमहंसाख्योऽवधूतो
वाहरेःकला ॥ सदानंदमयःसाक्षाद्दत्तात्रेयोमहामुनिः ॥ ७ ॥ यस्यप्रसादात्परमांसिद्धिंप्रापुःपरेनृपाः ॥ सहस्रार्जुनमुख्यायेयदुका
याधवादयः ॥ ८ ॥ नारदउवाच ॥ इतिश्रुत्वाशंबरारिर्नत्वासंपूज्यतंमुनिं ॥ संस्थाप्यचासनेदिव्येपप्रच्छेदंयदूत्तमः ॥ ९ ॥
प्रद्युम्नउवाच ॥ भगवन्मेहदिस्थंवैसंदेहंनाशयप्रभो ॥ जगतोब्रह्ममार्गोश्वहेत्वंतंब्रूहितत्वतः ॥ १० ॥ दत्तात्रेयउवाच ॥ दृश्य
तेनवसुर्यावत्तावदुल्काप्रयोजनं ॥ प्राप्तेवशेमहानंदेथोल्कायाःकिंप्रयोजनं ॥ ११ ॥ तावदास्तेजगत्साधोयावत्तत्त्वंनवेद्यते ॥ पर

स्मिन्ब्रह्मणिप्राप्तेजगतःकिंप्रयोजनं ॥ १२ ॥ आस्याबिंबोयथादर्शेपश्यतेनपरंवपुः ॥ प्रधानार्थेतथाजविोज्ञानेनासौपरात्परं ॥
 ॥ १३ ॥ यथासूर्योदयेसर्ववस्तुनेत्रेणदृश्यते ॥ तथाज्ञानोदयेब्रह्मतत्वंजीवेनसर्वतः ॥ १४ ॥ नारदउवाच ॥ इतिश्रुत्वाथतंन 
॥१४॥ त्वाप्रद्युम्नोयादवेश्वरः ॥ वैकुंठाद्रिंद्राविडेषुययौसेनासमन्वितः ॥ १५ ॥ सत्यवाक्धर्मतेत्वज्ञाराजर्षिर्द्राविडेश्वरः ॥ प्रद्युम्नंपूज
यामासभक्त्यापरमयायुतः ॥ १६ ॥ श्रीशैलदर्शनंकृत्वागिरिशालयमद्भुतं ॥ स्कंदंवीक्ष्यततोराजन्ययौपंपासरोवरे ॥ १७ ॥ गो
दावरींभीमरथींगतःश्रीद्वारकेश्वरः ॥ प्रदर्शयन्हरेस्तीर्थंमहेंद्राद्रिंततोययौ ॥ १८ ॥ महेंद्राद्रिंस्थितंरामंभार्गवंक्षात्रियांतकं ॥ नत्वा
प्रदक्षिणीकृत्यतत्रतस्थौहरेःसुतः ॥ १९ ॥ रामस्तस्याशिषंदत्त्वायादवानांबलायवै ॥ चतुरंगायराजेंद्रयोगेनार्हणमाचरत् ॥ २० ॥
भक्तसूपःप्रलेहश्चरुदिकादधिशाकजाः ॥ शिखारिण्यवलेहश्चबलकाचक्षुखेरिणी ॥ २१ ॥ त्रिकोणशर्करायुक्तोपटकोमधुशीर्षकः ॥
फेणिकाचोपरिष्टश्चशतपत्रःसछिद्रकः ॥ २२ ॥ चक्राभचिन्हकाश्चेत्थंसुधाकुंडलिकाःस्मृताः ॥ घृतपूरोवायुपूरस्तथाचंद्रकला
स्मृताः ॥ २३ ॥ दधिस्थलश्चकर्पूरनाडीस्थंखंडमंडलं ॥ गोधूमपरिखाश्चैवसुफलाढ्यास्तथैवच ॥ २४ ॥ दधिरूपोमोदक
श्चशाकसौधानएवच ॥ मंडकापायसंयुक्तंदाधिगोघृतमेव च ॥ २५ ॥ हैयंगवीनमंडूरीकुपिकापर्पटस्तथा ॥ शक्तिकालसिकाचैवसु
वृत्संधायएवहि ॥ २६ ॥ सुफलैश्चसितायुक्तैःफलानिविविधानिच ॥ यथामोहनभोगैश्चलवणंचतथैवच ॥ २७ ॥ कषायोमधुर
स्तिक्तःकटुरम्लस्त्वनेकधा ॥ षट्पंचाशत्तमश्चैवह्येतेभोगाःप्रकीर्तिताः ॥ २८ ॥ एतेषांभार्गवःशैलानकार्षीद्योगमास्थितः ॥ से ॥१४॥
न्येसंभोजितेतत्रहस्तन्यूनानतेभवन् ॥ २९ ॥ वैभवंभार्गवस्यापिदृष्ट्वासर्वेतिविस्मिताः ॥ प्रद्युम्नस्तंनमस्कृत्ययादवैःसहितस्तदा
॥ ३० ॥ सर्वेषांशृण्वतांराजन्पप्रच्छेदंहरेःसुतः ॥ प्रद्युम्नउवाच ॥ भगवन्भवतादत्तंसर्वेभ्योभोजनंपरं ॥ ३१ ॥ समृद्धयःसिद्धय
श्चत्वदंघ्रावास्थिताःप्रभो ॥ सर्वेषांहरिभक्तानांप्रियोभक्तस्तकोहरेः ॥ एतन्मेब्रूहिविप्रेंद्रत्वंपरावरवित्तमः ॥ ३२ ॥ परशुरामउ

वाच ॥ त्वंप्रभोकिंनजानासिलोकवत्पृच्छसेथमां ॥ लोकसंग्रहमेवाराकुर्वन्विचरसिक्षितौ ॥ ३३ ॥ निष्किंचनोहरिपदाब्जपराग
लुब्धःश्रीमत्कथाश्रवणकीर्तनतत्परोयः ॥ तद्रूपसिंधुलहरीविनिमग्नचित्तःश्रीकृष्णचंद्रदयितःकथितःसभक्तः ॥ ३४ ॥ दांतोमहा
नखिलजंगमवत्सलोयंशांतास्तितिक्षुरतिकारुणिकःसुहृत्सत् ॥ लोकंपुनातिनिजपादरजोभिराराच्छ्रीकृष्णचंद्रदयितःकथितःपरेश
॥ ३५ ॥ यःपारमेष्ठ्यमखिलंनमहेंद्रधिष्ण्यंनोसार्वभौममनिशंनरसाधिपत्यं ॥ नोयोगसिद्धिमभितोनपुनर्भवंवावांछत्यलंपरम
पादरजःसभक्तः ॥ ३६ ॥ निष्किंचनाःस्वकृतकर्मफलैर्विरागायत्तत्पदंहरिजनामुनयोमहांतः ॥ भक्ताजुषंतिहरिपादरजःप्रसक्ता
अन्येविदंतिनसुखंकिलनैरपेक्ष्यं ॥ ३७ ॥ भक्तात्प्रियोनविदितःपुरुषोत्तमस्यशंभुर्विधिर्नचरमानचरौहिणेयः ॥ भक्ताननुव्रजति
भक्तनिबद्धचितचूडामणिःसकललोकजनस्यकृष्णः ॥ ३८ ॥ गच्छन्निजंजनमनुप्रपुनातिलोकानावेदयन्हरिजनेस्वरुचिंमहात्मा॥
तस्मादतिवभजतांभगवान्मुकुंदोमुक्तिंददातिनकदापिसुभक्तियोगम् ॥ ३९ ॥ नारदउवाच ॥ इतिश्रुत्वायादवेंद्रोनत्वाश्रीभार्गवो
त्तमम् ॥ प्राच्यांदिशिययौराजन्गंगासागरसंगमम् ॥४०॥ इतिश्रीमद्गर्गसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेद्राविडदेश
विजयोनामचतुर्दशोध्यायः ॥ १४ ॥ ॥ नारदउवाच ॥ दिग्जयस्यमिषेणासौभूभारंहारयन्मुहुः ॥ प्रद्युम्नोभगवान्साक्षादंगदेशं
ततोययौ ॥ १ ॥ अंगेशोंतःपुराधीशोगृहीतोयादवैर्वने ॥ सोपितस्मैबलिंप्रादात्प्रद्युम्नायमहात्मने ॥ २ ॥ उड्डीशडामराधीशो बृ
हद्बाहुर्महाबलः ॥ नददौसबलिंतस्मैप्रद्युम्नायमदोत्कटः ॥ ३ ॥ प्रद्युम्नप्रेषितोवीरःसांबोजांबवतीसुतः ॥ एकाकीप्रययौधन्वीरथे
नादित्यवर्चसा ॥ ४ ॥ छादयामासबाणौघैर्डामरंनगरंनृप ॥ गिरिंतुषारपटलैर्जीमूतइवसर्वतः ॥ ५ ॥ तदातुडामराधीशोधर्षितः
सन्कृतांजलिः ॥ बलिंददौनमस्कृत्यप्रद्युम्नायमहात्मने ॥ ६ ॥ वंगदेशाधिपोवीरोवीरधन्वामदोत्कटः ॥ आययौसंमुखेयोद्धुमक्षौ
हिण्यावृतोबली ॥ ७ ॥ चंद्रभानुर्हरेःपुत्रःप्रद्युम्नस्यप्रपश्यतः ॥ बिभेदतद्बलंबाणैःकुवाक्यैर्मित्रतामिव ॥ ८ ॥ करिणांबाणभिन्ना

नांशिरसोमौक्तिकानिच ॥ प्रस्फुरंतिनिपेतुःकौरात्रौतारागणाइव ॥ ९ ॥ निपेतूरथिनोऽनेकागजाश्वाश्वपदातयः ॥ तद्बाणैश्छिन
शिरसःकूष्मांडशकलाइव ॥ १० ॥ क्षणमात्रेणतत्सैन्यक्षतजानांनदीह्यभूत ॥ मनस्विनांहर्षकरीत्रस्तानांभयकारिणी ॥ ११ ॥
मुंडैःकबंधैर्धावद्भिर्हारकेयूरकुंडलैः ॥ किरीटैःकंकणैःशस्त्रैर्महामारीवभूर्बभौ ॥ १२ ॥ कूष्मांडोन्मादवेतालाभैरवाब्रह्मराक्षसाः ॥
शिरांसिजगृहुर्वेगाद्धरमालार्थहेतवे ॥ १३ ॥ इत्थंनिपातितेसैन्येवीरधन्वासमागतः ॥ चंद्रभानुंतताडाशुगदयावज्रकल्पया ॥
॥ १४ ॥ तद्गदातिप्रहारेणनचचालहरेःसुतः ॥ चंद्रभानुर्गदांनीत्वातंतताडभुजांतरे ॥ १५ ॥ गदाप्रहारव्यथितोमूर्च्छितोधरणी
तले ॥ पपातपादपइवप्रोद्वमन्रुधिरंमुखात् ॥ १६ ॥ लब्धसंज्ञोमुहूर्तेनवंगदेशाधिपोनृपः ॥ प्रययौशरणंसोपिप्रद्युम्नस्यमहात्मनः
॥ १७ ॥ यातेदत्तबलौराजन्नगरंवीरधन्वनि ॥ ब्रह्मपुत्रंसमुत्तीर्यप्रद्युम्नोमितविक्रमः ॥ १८ ॥ आशीमाधिपतिंबिंबंगृहीत्वायादवे
श्वरः ॥ बलिमादाययदुभिःकामरूपंसमाययौ ॥ १९ ॥ कामरूपेश्वरःपुंड्रऐंद्रजालविशारदः ॥ निर्गतःसेनयासार्द्धंयोद्धुंप्रद्युम्नसंमु
खे ॥ २० ॥ आशीमानांयदूनांचघोरंयुद्धंबभूवह ॥ गाणैःकुठारैःपरिघैःशूलैःखड्गर्ष्टिशक्तिभिः ॥ २१ ॥ पुंड्रोविद्याश्चकाराशुपैशा
चोरगराक्षसीः॥ततोगुह्यकगंधर्वाःसर्वतोमैथिलेश्वर ॥२२॥ प्रधावंतोरणेराजन्पिशाचाःपिशिताशनाः॥कोटिशःकोटिशोंगारान्क्षेप
यंतोमुहुर्मुहुः ॥ २३ ॥ क्षणमात्रेणतत्सैन्यंवमंतोगरलंमुखात् ॥ फूत्कारमपिकुर्वंतोदंदशूकाःसमागताः ॥ २४ ॥ खरारूढादंतव
कालल्जिह्वाभयंकराः ॥ चर्वयंतोनरान्युद्धेधावंतोराक्षसास्ततः ॥ २५ ॥ यक्षाश्वसिंहवदनातुरंगवदनान्नृप ॥ छिंधिभिंधीतिग
र्जंतःशूलहस्ताइतस्ततः ॥ २६ ॥ क्षणमात्रेणमेघानांसमूहैश्छादितंनभः ॥ अंधकारोह्यभूद्राजन्रजसावातवेगतः ॥ २७ ॥
भोजवृष्ण्यंधकमधुशूरसेनदशार्हकाः ॥ भयंप्रापुर्महायुद्धेन्यस्तशस्त्रायदूत्तमाः ॥२८॥ कृष्णदत्तंधनुःकार्ष्णिरादायप्रतिकारवित् ॥
सत्वात्मिकांमहाविद्यांबाणैःप्रायुंक्तमैथिल ॥ २९ ॥ बाणैःपिशाचानुरगान्सयक्षान्रक्षांसिगंधर्वघनांधकारान् ॥ बिभेदादिव्यैः ॥१५॥

प्रभवैर्यथाहिनीहारमेघान्किरणैर्विवस्वान् ॥ ३० ॥ बाणैश्चपुंड्रंसरथंसवाहनंतंभ्रामयित्वाघटिकाद्वयंखे ॥ निपातयामासरणेसप
त्नंपद्मंपृथिव्यामिवमारुतःकिल ॥ ३१ ॥ बुद्ध्वरतदातंशरणंसमेत्यप्रधर्षितःसद्यउपायनानि ॥ लक्षैर्हयानामयुतैर्गजानांयुतानिद
त्त्वाप्रणनामकार्ष्णि ॥ ३२ ॥ विपाशांसतदोत्तीर्यसैन्यैःशोणनदंनृप ॥ कैकयानाययौधन्वीप्रद्युम्नोयदुनंदनः ॥ ३३ ॥ कैकयस्या
धिपोराजाधृतकेतुर्महाबलः ॥ वसुदेवस्वसुःसाक्षाच्छ्रुतकीर्तेःपतिर्महान् ॥ ३४ ॥ प्रद्युम्नमर्हयामासधृतकेतुःसयादवं ॥ भक्त्याप
रमयाराजञ्छ्रीकृष्णस्यप्रभाववित ॥ ३५ ॥ इतिश्रीमद्गर्गसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेकैकयविजयोनामपंचद
शोऽध्यायः ॥१५॥ ॥ नारदउवाच ॥ दुंदुभीन्नादयंस्तस्मात्प्रद्युम्नोयदुनंदनः॥मैथिलानाययौराजस्तवदेशान्सुखावृतान् ॥१॥
स्वर्णसौधैरत्युच्चैःसघटैराजतांपुरीम् ॥ मिथिलांवीक्ष्यतामाराद्धुद्धवंप्राहमाधवः ॥ २ ॥ प्रद्युम्नउवाच ॥ कस्यैषानगरीमंत्रिन्दृ
श्यतेसांप्रतंमया ॥ राजतेबहुसौधैश्चपुरीभोगवतीयथा ॥ ३ ॥ उद्धवउवाच ॥ जनकस्यपुरीह्येषामिथिलानाममानद ॥ मिथिलें
द्रोधृतिस्तस्यांमहाभागवतःकविः ॥ ४ ॥ सर्वधर्मभृतांश्रेष्ठःश्रीकृष्णेष्टोहरिप्रियः ॥ बहुलाश्वस्तस्यसुतआबाल्याद्भक्तिकृद्धरेः ॥
॥ ५ ॥ तस्मैस्वंदर्शनंदातुंभगवानागमिष्यति ॥ बहुलाश्वंराजपुत्रंश्रुतदेवंद्विजंतथा ॥ ६ ॥ स्मरत्यलंद्वारकायांश्रीकृष्णोभगवान्
हरिः ॥ जेतुंनशक्योदेवेंद्रैर्मनुजैश्चकुतःप्रभो ॥ ७ ॥ धृतिःपरमयाभक्त्याश्रीकृष्णवशकारकः ॥ नारदउवाच ॥ तच्छ्रुत्वाभगवान्
कार्ष्णिरुद्धवेनसमन्वितः ॥ स्वशिष्यमुद्धवंकृत्वाधृतिंद्रष्टुंसमाययौ ॥ ८ ॥ भक्तेरेवपरीक्षांहिकर्तुंतस्यनृपस्यच ॥ ददर्शमिथिलां
कार्ष्णिरुद्धवेनसमन्वितः ॥ ९ ॥ चर्मशस्त्रधृतावीरामालातिलकशोभिताः ॥ जपंतःकृष्णनामानिसर्वेवैयत्रमालया ॥ १० ॥ लि
खितानिचनामानिद्वारिद्वारिहरेर्नृणां ॥ तथाश्रीकृष्णचित्राणिलिखितानिशुभानिच ॥ ११ ॥ कुड्येकुड्येगृहाणांचगदापद्मानिमा
नद ॥ दशावतारचित्राणिशंखचक्राणियत्रवै ॥ १२ ॥ तुलसीमंदिराणीत्थंप्रांगणेचगृहेगृहे ॥ एवंपश्यन्ससौधानिमिथिलायांज

नानूबहून् ॥ १३ ॥ मालातिलकसंयुक्तान्सर्वान्भक्तान्ददर्शह ॥ तिलकैर्द्वादशाख्यैश्चयुक्तैःकुंकुमजैर्वृतान् ॥ १४ ॥ गोपीचंदन

मुद्राभिश्चर्चिताङ्च्छांतविग्रहान् ॥ ऊर्ध्वपुंड्रधरान्विप्रान्हरिमंदिरचित्रितान् ॥ १५ ॥ गदांमुद्रांललाटेचऊर्ध्वंवाहरिनामतः ॥ 
चक्रंशंखंचकमलंकूर्ममत्स्यंभुजद्वये ॥ १६ ॥ दधतश्चधनुर्बाणंमूर्ध्निश्रीनंदकंहृदि ॥ मुसलंचहलंराजन्नथकार्ष्णिर्ददर्शह ॥ १७ ॥
॥१६॥
कस्यांवीथ्यांभागवतंकेचिच्छृण्वंतिमानवाः ॥ इतिहासंभारतंचहरिवंशंतथापरे ॥ १८ ॥ सनत्कुमारवासिष्ठयाज्ञवल्क्यपराशराः॥
गर्गपौलस्त्यधर्मादिसंहिताःकेपठंतिवै ॥ १९ ॥ ब्राह्मंपाद्मंवैष्णवंचशैवंलैंगंसगारुडम् ॥ नारदीयंभागवतमाग्नेयंस्कंदसंज्ञितम् ॥
॥ २० ॥ भविष्यंब्रह्मवैवर्तंमार्कंडेयंसवामनम् ॥ वाराहमात्स्यकौर्माणिब्रह्मांडाख्यंतथैवच ॥ २१ ॥ वीथ्यांवीथ्यांस्मशृण्वंतिज
नाःसर्वेगृहेगृहे ॥ वाल्मीकिकाव्यंकेचिद्वैश्रीरामचरितामृतम् ॥ २२ ॥ स्मृतीःपठंतिकेचिद्वैकेचिद्वेदत्रयींद्विजाः ॥ केचित्कुर्वंतिय
ज्ञंवैवैष्णवंमंगलायनं ॥ २३ ॥ राधाकृष्णेतिकृष्णेतिकेवदंतिमुहुर्मुहुः ॥ केचिन्नृत्यंतिगायंतिहरिकीर्तनतत्पराः ॥ २४ ॥ मृदंग
तालवादित्रैःकांस्यवीणामनोहरैः ॥ मंदिरेमंदिरेविष्णोःकीर्तनंश्रूयतेजनैः ॥ २५ ॥ नवलक्षणसंयुक्तांभक्तिंयांप्रेमलक्षणां ॥ कुर्वं
तिमैथिलाराजन्मिथिलायांगृहेगृहे ॥ २६ ॥ एवंतुनगरींदृष्ट्वाप्रद्युम्नोभगवान्हरिः ॥ राजद्वारंसमेत्याशुमैथिलेशंददर्शह ॥ २७ ॥
मैथिलेशसभायांतुवेदव्यासःशुकोमुनिः ॥ याज्ञवल्क्योवसिष्ठश्चगौतमोहंबृहस्पतिः ॥ २८ ॥ अन्येचयमुनयस्तत्रवेदमूर्तिधराइ
व ॥ दृश्यंतेधर्मवक्तारोहरिनिष्ठाइतस्ततः ॥ २९ ॥ मैथिलेंद्रधृतिस्तत्रभक्तिभावनताननः ॥ बलस्यपादुकापूजांकुरुतेविधिवन्नृप
॥ ३० ॥ जपन्मुक्तिकरंनामश्रीकृष्णबलदेवयोः ॥ दृष्ट्वोत्थायनमश्चक्रेसशिष्यंब्रह्मचारिणं ॥ ३१ ॥ तंपूजयित्वाविधिवत्पाद्याद्यै ॥१६॥
मैथिलेश्वरः ॥ कृतांजलिपुटोराजातदग्रेचास्थितोऽभवत ॥३२॥ जनकउवाच ॥ अद्यमेसफलंजन्ममंदिरंविशदीकृतम् ॥ देवर्षि
पितरःसर्वेसंतुष्टाआगतेत्वयि ॥ ३३ ॥ निर्विकल्पाःसमदृशस्त्वादृशाःसाधवःक्षितौ ॥ निःश्रेयसायभगवन्दीनानांविचरंतिहि ॥

॥ ३४ ॥ ब्रह्मचार्युवाच ॥ धन्योसिराजशार्दूलधन्यातेमिथिलापुरी ॥ धन्याःप्रजाश्चतेसर्वाविष्णुभक्तिसमन्विताः ॥ ३५ ॥
जनकउवाच ॥ ममेयंनगरीनास्तिनप्रजानगृहंधनं ॥ कलत्रपुत्रपौत्रादिसर्वंकृष्णस्यचैवहि ॥ ३६ ॥ परिपूर्णतमःसाक्षाच्छ्रीकृष्णो
भगवान्स्वयम् ॥ असंख्यब्रह्मांडपतिर्गोलोकेधाम्निराजते ॥ ३७ ॥ वासुदेवःसंकर्षणःप्रद्युम्नःपुरुषःस्वयं ॥ अनिरुद्धस्तथाचैकश्च
तुर्व्यूहोभवत्क्षितौ ॥ ३८ ॥ कायेनमनसावाचाबुद्ध्यावाचेंद्रियैःकृतं ॥ तस्मैसमर्पितंशौक्ल्यंमयाब्रह्मन्महामुने ॥ ३९ ॥ श्री
ब्रह्मचार्युवाच ॥ हेवैदेहमहाभागविष्णुभक्तिमतांवर ॥ त्वद्भक्त्यातोषितःकृष्णस्तवैकत्वंप्रदास्यति ॥ ४० ॥ जनकउवाच ॥ दा
सोहंकृष्णभक्तानांत्वादृशानांमहात्मनां ॥ मुक्तिंनेच्छामिहेब्रह्मन्नेकतांहेतुवर्जितः ॥ ४१ ॥ ब्रह्मचार्युवाच ॥ करोष्यहेतुकींभक्तिं
राजंस्त्वंहेतुवर्जितः ॥ निर्गुणैर्भक्तिभावैश्चप्रमलक्षणसंयुतः ॥ ४२ ॥ प्रद्युम्नोभगवान्साक्षाद्दिग्जयार्थविनिर्गतः ॥ नायातस्तवगे
हेपुसंदेहोमेमहानभूत् ॥ ४३ ॥ जनकउवाच ॥ प्रद्युम्नोभगवान्साक्षादंतर्यामिहरिःस्वयं ॥ सर्वगःसर्वविच्छश्वदत्रनास्तिचकिं
प्रभो ॥ ४४ ॥ ब्रह्मचार्युवाच ॥ ज्ञानदृष्ट्यापिचेत्कार्ष्णिमन्यसेत्रनिरंतरं ॥ तर्हिदर्शयतंदेवंप्रन्हादइवदिव्यदृक् ॥ ४५ ॥ नारद
उवाच ॥ एतच्छ्रुत्वातदाराजामहाभागवतोधृतिः ॥ अश्रुपूर्णमुखोभूत्वाप्राहगद्गदयागिरा ॥ ४६ ॥ जनकउवाच ॥ यदिमेश्रीहरे
र्भक्तिरनिमित्ताकृताभुवि ॥ तर्हिकार्ष्णिर्हरेःपुत्रःप्रादुर्भूयान्ममाग्रतः ॥ ४७ ॥ यदिश्रीकृष्णभक्तानांदासोहंयदितत्कृपा ॥ सर्वत्रयदितद्भा
वस्तर्हिभूयान्मनोरथः ॥ ४८ ॥ नारदउवाच ॥ प्रादुर्बभूवाशुतदैवकार्ष्णिर्विसृज्यसद्यःकिलवर्णरूपं ॥ पश्यत्सुसर्वेषुजनेषुशिष्यःसगद्ग
दोभूद्धरिभक्तिनिष्ठः ॥ ४९ ॥ घनप्रभंपद्मदलायतेक्षणंप्रलंबबाहुंजगतांमनोहरम् ॥ पीतांबरंनीलगुडालकालिभिःस्वलंकृतंश्रीमुखपद्म
मंडलं ॥ ५० ॥ शीततुबालार्ककिरीटकुंडलंकांच्यंगदस्फूर्जितदिव्यविग्रहं ॥ विलोक्यतंकृष्णसुतंकृतांजलिर्ननामसाष्टांगमलंधृतिर्नृपः
॥ ५१ ॥ जनकउवाच ॥ अहोतिधन्यंममभूरिभाग्यंदत्तंत्वयामेनिजदर्शनंहि ॥ जातोद्यकायाधवतुल्यआराद्हंकृतार्थोस्मिकुलेनभूमन् ॥

॥ ५२ ॥ श्रीप्रद्युम्नउवाच ॥ धन्यस्त्वंनृपशार्दूलभक्तस्त्वंमत्प्रभाववित् ॥ भक्तिभावपरीक्षार्थंप्राप्तोहंतवसांप्रतं ॥ ५३ ॥ अद्यैव
ममसारूप्यंभूयात्तेमैथिलेश्वर ॥ बलमायुर्यशःकीर्तिरिहलोकेभवत्वलं ॥ ५४ ॥ नारदउवाच ॥ तवपित्राचधृतिनापूजितःपश्य
तांसतां ॥ प्रययौशिबिरानराजन्प्रद्युम्नोभक्तवत्सलः ॥ ५५ ॥ इतिश्रीमद्गर्गसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेजनको
पाख्यानंनामषोडशोऽध्यायः ॥ १६ ॥ ॥ ॥ श्रीनारदउवाच ॥ अथातोमागधाञ्जेतुंप्रद्युम्नोमीनकेतनः ॥ गिरिव्रजंजगामाशु
स्वसैन्यैःपरिवारितः ॥ १ ॥ श्रुत्वागतंहरेःपुत्रंदिग्जयार्थंविशेषतः ॥ जरासंधोमागधेंद्रोमहाकोपंचकारह ॥ २ ॥ जरासंधउ
वाच ॥ तुच्छायेयादवाःसर्वेयुधिविक्लवचेतसः ॥ तेद्यवैजगतींजेतुंनिर्गतागतबुद्धयः ॥ ३ ॥ मथुरांस्वपुरींत्यक्त्वामद्भयान्माधवो
पिहि ॥ समुद्रंशरणंप्रागात्पिताचास्यदुरात्मनः ॥ ४ ॥ प्रवर्षणेरामकृष्णौमयाभस्मीकृतौबलात् ॥ छलाद्द्रुद्रुवतुस्तौद्वौद्वारकायांस
माश्रितौ ॥ ५ ॥ बध्वातौचानयिष्यामिसोग्रसेनौकुशस्थलीं ॥ अयादवींकरिष्यामिपृथ्वींसागरमेखलां ॥ ६ ॥ नारदउवाच ॥
इत्युक्त्वानिर्गतोराजागिरिव्रजपुराद्बहिः ॥ अक्षौहिणीभिर्विंशत्यातिसृभिःसंयुतोबली ॥ ७ ॥ गोमूत्रचयसिंदूरकस्तूरीपत्रभृन्मु
खे ॥ स्रवन्मदैश्चतुर्दंतैरैरावतकुलोद्भवैः ॥ ८ ॥ शुंडादंडस्यफूत्कारैःक्षेपयद्भिस्तरून्बहून् ॥ बभौगजैर्मागधेंद्रोमेघैरिंद्रइवप्रभुः ॥
॥ ९ ॥ रथैश्चदेवधिष्ण्याभैःसध्वजैरश्वनेतृभिः ॥ चामरैर्दोलितैराजंल्लोलचक्रध्वनिद्युतिः ॥ १० ॥ तुरंगमैर्वायुवेगैश्चित्रवर्णैर्म
दोत्कटैः ॥ सौवर्णपट्टहाराद्यैःशिखारश्म्युर्द्धचामरैः ॥ ११ ॥ सकंचुकैर्वीरजनैःखड्गचर्मधनुर्धरैः ॥ विद्याधरसमैःप्रागान्मागधेंद्रोमहा
बलः ॥ १२ ॥ धुंकारैर्दुंदुभीनांचदिशोनेदुर्धनुस्वनैः ॥ चचालवसुधासैन्यैरजोभिश्छादितंनभः ॥ १३ ॥ जरासंधस्यतत्सैन्यंप्रल 
याब्धिमिवोल्बणं ॥ विस्मितायादवाःसर्वेबभूवुर्वीक्ष्यमैथिल ॥ १४ ॥ प्रद्युम्नोभगवान्वीक्ष्यमागधेंद्रबलार्णवं ॥ शंखंदध्मौदक्षि
णाख्यंमाभैष्टेत्यभयंददत् ॥ १५ ॥ ततःसांबोमहाबाहुःप्रद्युम्नस्यप्रपश्यतः ॥ अक्षौहिणीनांदशभिर्युयुधेमागधेनसः ॥ १६ ॥

गजागजैर्युयुधिरेरथिभीरथिनोमृधे ॥ हयाहयैःपत्तयश्चपत्तिभिर्मैथिलेश्वर ॥ १७ ॥ बभूवतुमुलंयुद्धमद्भुतंरोमहर्षणं ॥ मागधानां
यदूनांचसुराणांनिर्जरैर्यथा ॥ १८ ॥ अश्वारूढाःकेपिवीराभल्लहस्ताइतस्ततः ॥ मर्दयंतोगजारूढाःकरिकुंभगतार्चयः ॥ १९ ॥
केचिच्छक्तीस्तडिद्वर्णाग्गृहीत्वाचिक्षिपुर्बलात् ॥ ताःशक्तयस्त्वरीनभित्वादंशितान्धरणींगताः ॥ २० ॥ केचिद्वीरानदंतःकौरथां
गानिचचिक्षिपुः॥चिच्छिदुर्वीरपटलंनीहारंरवयोयथा॥ २१ ॥भिंदिपालैर्मुद्गरैश्चकुठारैरसिपट्टिशैः ॥अच्छूरिकार्ष्टिभिस्तीक्ष्णैर्निस्त्रिंशै
र्युयुधुश्चखे ॥ २२ ॥ तोमरैश्चगदाभिश्चबाणैश्छिन्नानिभूतले ॥ निपेतुर्वीरकरिणामश्वानांचशिरांसिच ॥ २३ ॥ कबंधास्तत्रचो
त्पेतुःपातयंतोहयान्नरान् ॥ खड्गहस्ताःप्रधावंतःसंग्रामेषुभयंकराः ॥ २४ ॥ वीरोपरिगतावीरानिपेतुश्छिन्नबाहवः ॥ हयोपरि
हयाःकेचिद्बाणैःसञ्छिन्नकंधराः ॥ २५ ॥ विद्याधर्यश्चगंधर्व्योवव्रिरेह्यंबरेगतान् ॥ वीरान्पतीन्समिच्छंत्यस्तासांचाभूत्कलिर्महा
न् ॥ २६ ॥ क्षत्रधर्मपराःकेचिद्युद्धदत्तासवोनृप ॥ नचलंतःपदंपृष्ठेसदासंग्रामशालिनः ॥ २७ ॥ जग्मुःपरपदंतेवैभित्वामार्तंडमं
डलं ॥ ननृतुःशिशुमारेवैमंडलेचनटाइव ॥ २८ ॥ एवंसांबमहावीरैर्मर्दितंमागधंबलं ॥ दुद्रावपश्यतांतेषांकृष्णभक्त्यायथाऽशुभं
॥ २९ ॥ केचिद्वैवृक्णवर्माणश्छिन्नचापास्तथापरे ॥ पलायमानाधावंतस्त्यक्तखड्गर्ष्टिपाणयः ॥ ३० ॥ पलायमानंस्वबलंवीक्ष्य
तन्मागधेश्वरः ॥ धनुष्टंकारयन्प्राप्तोमाभैष्टेत्यभयंददौ ॥ ३१ ॥ स्वबलंनोदयामासजरासंधोधनुर्ज्यया ॥ महामात्यःप्रेरयतिह्यं
कुशेनगजंयथा ॥ ३२ ॥ सांबस्तदैवसंप्राप्तोदशभिश्चापनिर्गतैः ॥ बाणैर्विव्याधसमरेमागधेंद्रंमहाबलं ॥ ३३ ॥ धनुर्ज्यामब्धिक
ल्लोलभीमसंघर्षनादिनीं ॥ चिच्छेददशभिर्बाणैःसांबोजांबवतीसुतः ॥ ३४ ॥ धनुरन्यत्समादायजरासंधोमहाबलः ॥ धनुःसांब
स्यचिच्छेदबाणैर्दशभिरग्रतः ॥ ३५ ॥ चतुर्भिश्चतुरोवाहान्द्वाभ्यांकेतुंरथंत्रिभिः ॥ एकेनसारथिंजघ्नेमागधेंद्रोजरासुतः ॥ ३६ ॥
सछिन्नधन्वाविरथोहताश्वोहतसारथिः ॥ पुनरन्यंसमास्थायरथंसांबोमहाबलः ॥ ३७ ॥ गृहीत्वाचापमत्युग्रंसज्जंकृत्वाविधा

 नः ॥ तद्रथंचूर्णयामाससांबोबाणशतैरपि ॥ ३८ ॥ रथंत्यक्त्वाजरासंधोगजमारुह्यवेगतः ॥ बभौगजेमागधेंद्रइंद्रऐरावतेयथा ॥ 
॥ ३९ ॥ चित्रपत्रविचित्रांगंकालांतकयमोपमं ॥ सांबायनोदयामासमत्तेभंक्रुद्धमानसः ॥ ४० ॥ गृहीत्वासरथंसांबंशुंडादंडेनना
 गराट् ॥ कुर्वंश्चीत्कारविकलश्चिक्षेपनवयोजनं ॥ ४१ ॥ तदाकोलाहलेजातेसांबसेनासुमैथिल ॥ प्रद्युम्नपार्श्वाच्चगदःप्राप्तोभूद्वेगतो 
बलं ॥ ४२ ॥ विनाशयन्नंधकारंयथार्कउदयाचलात् ॥ जरासंधस्यापिकजंमुष्टिनावसुदेवजः ॥ ४३ ॥ जघानशक्रोवज्रेणयथाप्रो
द्दंदरीभृतं ॥ गजोमुष्टिप्रहारेणविह्वलोधरणींगतः ॥ ४४ ॥ जगामपंचतांराजंस्तदद्भुतमिवाभवत् ॥ जरासंधःसमुत्थायगदामादा
यवेगतः ॥ ४५ ॥ गदंतताडसहसाजगर्जघनवद्बली ॥ तत्प्रहारेणसगदोनचचालरणांगणात् ॥ ४६ ॥ त्वरंगदांसमादायलक्ष
भारविनिर्मितां ॥ अताडयज्जरासंधंसिंहनादमथाकरोत् ॥ ४७ ॥ तत्प्रहारेणव्यथितोबृहद्रथसुतोबली ॥ जरासंधःसमुत्थायगृ
हीत्वासगदंगदं ॥ ४८ ॥ चिक्षेपरोषतोराजन्नाकाशेशतयोजनं ॥ गदोपिमागधंनीत्वाभ्रामयित्वामहाबलः ॥ ४९ ॥ चिक्षेपगग
नेतंवैय जनानांसहस्रकं ॥ आकाशात्पतितोराजामागधोविंध्यपर्वते ॥ ५० ॥ उत्थाययुयुधेतेनगदेनापिमहाबलः ॥ तदैवसां
बःसंप्राप्तोगृहीत्वामागधेश्वरं ॥ ५१ ॥ भूपृष्ठेपोथयामाससिंहःसिंहमिवौजसा ॥ एकेनमुष्टिनासांबंद्वितीयेनगदंतथा ॥ ५२ ॥
तताडमागधोराजाजगर्जाशुरणांगणे ॥ मुष्टिप्रहारव्यथितौगदःसांबश्चमूर्च्छितौ ॥ ५३ ॥ हाहाकारोमहानासीत्तदैवाशुरणांगणे ॥
रथेनातिपताकेनप्रद्युम्नोयादवेश्वरः ॥ ५४ ॥ अक्षौहिणीयुतःप्राप्तोमाभैष्टेत्यभयंददौ ॥ जरासंधोगदांनीत्वालक्षभारविनिर्मितां ॥
॥ ५५ ॥ विवेशयदुसेनायामरण्येग्निरिवप्रभुः ॥ रथान्गजान्सवीरांश्चतुरंगान्सैंधवान्बहून् ॥ ५६ ॥ पातयामासराजेंद्रपद्मानीव 
महागजः ॥ जरासंधस्ययासेनासापिसर्वासमागता ॥५७॥ जघाननिशितैर्बाणैर्यदुनासर्वतोबलं ॥ प्रद्युम्नोयुयुधेयुद्धेनिर्भयोयादवे
श्वरः ॥ ५८ ॥ निपातयन्नरीन्बाणैर्धनुष्टंकारयन्मुहुः ॥ तदैवयदुपुर्यास्तुबलदेवःसमागतः ॥ ५९ ॥ प्रादुर्बभूवतत्रापिसर्वेषांप

श्यतांसतां ॥ समाकृष्यहलाग्रेणमागधेंद्रमहाबलं ॥ ६० ॥ मुसलेनाहनत्क्रुद्धोबलदेवोमहाबलः ॥ शतयोजनपर्यंतंरथाश्वगजप
त्तयः ॥ ६१ ॥ पतिताभिन्नशिरसःसर्वेवैनिधनं गताः ॥ देवदुंदुभयोनेदुर्नरदुंदुभयस्तदा ॥ ६२ ॥ बलदेवोपरिसुराःपुष्पवर्षंप्रच
क्रिरे ॥ तदाजयजयारावोयदूनांस्वबलेमहान् ॥ ६३ ॥ प्रद्युम्नाद्यास्ततोनेमुःकामपालंगतव्यथाः ॥ इत्थंजित्वामागधेंद्रंबलदेवो
महाबलः ॥ ६४ ॥ प्रययौद्वारकांराजन्भगवान्भक्तवत्सलः ॥ जरासंधसुतोधीमान्सहदेवउपायनं ॥ ६५ ॥ नीत्वापुरःशंबरारे
र्गिरिदुर्गाद्विनिर्गतः ॥ अश्वार्बुदंरथनांच द्विलक्षंहस्तिनांतथा ॥ ६६ ॥ ददौषष्टिसहस्राणिनत्वाकार्ष्णिप्रभाववित् ॥ ६७ ॥ इति
श्रीमद्गर्गसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेमागधविजयोनामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ नारदउवाच ॥ अथ
कार्ष्णिर्गयामेत्यफल्गुंस्नात्वाससैनिकः ॥अन्यान्देशांस्ततोजेतुंप्रस्थानमकरोत्पुनः ॥ १ ॥ श्रुत्वाजितंजरासंधंतदातंकान्नृपाःपरे॥
उपायनंददुस्तेवैभयार्ताःशरणंगताः ॥ २ ॥ गौतमींसरयूंपुण्यामनुस्रोतंततोऽगमत् ॥ ततोभागीरथीतीरेकाशीमभिजगामह ॥
॥ ३ ॥ पार्ष्णिग्राहःकाशिराजोगृहीतोमृगयांगतः ॥ सोपितस्मैबलिंप्रादाच्छ्रुत्वातस्यबलंमहत् ॥ ४ ॥ प्रद्युम्नःसैनिकैःसार्द्धंकौश
लान्प्रगतोबली ॥ अयोध्यानिकटेराजन्नंदिग्रामेस्थितोभवत् ॥ ५ ॥ कौशलेंद्रोनग्नजिच्चतुरंगैश्वगजैरथैः ॥ महाधनैःशंबरारिमर्ह
यामासतत्त्ववित् ॥६॥ उत्तरेशोदीपतमोनयपालाधिपोगजः ॥ विशालेशोबर्हिणश्चएतेवैतंबलिंददुः ॥७॥ नैमिषेशोहरेर्भक्तःश्रीकृ
ष्णस्यप्रभाववित् ॥ कृतांजलिपुटोभूत्वाददौतस्मैबलिंनृपः ॥ ८ ॥ प्रयागंगतवान्कार्ष्णिस्त्रिवेणींपापनाशिनीं ॥ स्नात्वाददौ
महादानंतीर्थराजप्रभाववित् ॥ ९ ॥ गजाविंशतिसाहस्रमश्वानांदशलक्षकं ॥ रथानांचचतुर्लक्षंगवांतत्रदशार्बुदं ॥ १० ॥ हेम
मालासमायुक्तंहेमांबरसमन्वितं ॥ दशभारंसुवर्णानांमुक्तानांलक्षमेवहि ॥ ११ ॥ द्विलक्षंनवरत्नानांवस्त्राणांदशलक्षकं ॥ काश्मी
रकंबलानांचद्विलक्षंनवकंबलं ॥ १२ ॥ ब्राह्मणेभ्योददौकार्ष्णिस्तीर्थराजेहरिप्रिये ॥ कारूषाधिपतिस्तत्रपौंड्रकोनाममैथिल॥१३॥

 कृष्णशत्रुःसोपिकार्ष्णिंपूजयामासशंकितः ॥ प्रद्युम्नंचागतंवीक्ष्यपांचालेकान्यकुब्जके ॥१४॥ भयंप्रापुर्नृपाःसर्वेदुर्गेदुर्गेकृतार्गलाः॥ 
विचेलुर्यादवात्सर्वेभयार्तादुर्गमाश्रिताः ॥ १५ ॥ बिंबदेशाधिपोराजादीर्घबाहुर्महाबलः ॥ शंबरारेःपरंसंधिंकर्तुंसैन्येसमाययौ ॥
 ॥ १६ ॥ दीर्घबाहुरुवाच ॥ यूयंसर्वेयादवेंद्राआगताजयिनोदिशां ॥ मनोरथंमेकुरुतांभवेयंतुष्टमानसः ॥ १७ ॥ सजलस्यापि 
काचस्यपात्रस्यशरवेधतः ॥ नक्षरेद्बिंदुरेकोपिबाणस्तदधितिष्ठति ॥१८॥ नपात्रंशकलीभूतंतन्मध्येहस्तलाघवं ॥ येकुर्वंतिप्रतिज्ञां
मेतेभ्योदास्यामिकन्यकाः ॥१९॥ यूयंसर्वेयादवेंद्राधनुर्वेदविशारदाः ॥ मयाऽपिनारदमुखाच्छ्रुताःपूर्वंमहाबलाः ॥ २० ॥ नारद
उवाच ॥ सर्वेषांविस्मितानांचप्रद्युम्नोधन्विनांवरः ॥ तथेत्युवाचसदसिबिंदुदेशाधिपंनृप ॥ २१ ॥ दीर्घवंशौसुविस्थाप्यगुणंबध्वा
तदंतरे ॥ गुणेबध्वाकाचकुंभंसजलंपश्यतांसतां ॥ २२ ॥ धनुर्गृहीत्वातद्वीक्ष्यबाणंकार्ष्णिःसमादधे ॥ काचपात्रंशरोभित्वातस्थौ
मध्येर्द्धनिःसृतः ॥ २३ ॥ एकतोमुखपुंखाभ्यांरविरश्मिरिवांबुदे ॥ काचपात्रेबभौबाणस्तदद्भुतमिवाभवत् ॥ २४ ॥ नपात्रंशकली
भूतंत्रिकुशस्यफलंयथा ॥ नचालनंकंपनंचबिंदुस्त्रावोपिनाभवत् ॥ २५ ॥ प्रद्युम्नोभगवान्बाणंद्वितीयंसंदधेपुनः ॥ सोपिपूर्वंसमुत्सृ
ज्यतत्रतस्थौविदेहराट् ॥२६॥ सांबोपिधनुरादायबाणान्पंचसमाददे ॥ काचपात्रंचतेभित्वातस्थुस्तत्रार्धनिःसृताः ॥२७॥ युयुधा
नोधनुर्नीत्वाबाणमेकंसमाक्षिपत ॥ सर्वेषांपश्यतांतेषांपात्रंचूर्णीबभूवह ॥ २८ ॥ उच्चैर्जहसुःसर्वेयादवाःपरसैनिकाः ॥ त्वंमहा
न्बाणधारीहकार्तवीर्यार्जुनोयथा ॥ २९ ॥ अर्जुनोभरतोरामस्त्रिपुरघ्नोहिवाभवान् ॥ द्रोणोभीष्मोऽथवाकर्णोजामदग्न्यइवाभवत् ॥
॥ ३० ॥ अन्यत्पात्रंसमाधायानिरुद्धोधन्विनांवरः ॥ अधोगत्वाथतद्दृष्ट्वाबाणंचिक्षेपलाघवात ॥ ३१ ॥ सोपिपात्रतलंभित्वात 
स्थौतत्रापिनिःसृतः ॥ तत्पात्राद्धस्तपंचोर्ध्वंबध्वापाषाणमंबरे ॥ ३२ ॥ दीप्तिमान्धनुरादायबाणमेकंसमादधे ॥ सोपिपात्रतलंभि
त्वाबाणमुत्सृज्यचाग्रतः ॥ ३३ ॥ ताडयित्वाचपाषाणंपुनस्तत्रसमाश्रितः ॥ बाणवेगेनतदपिबिंदुस्त्रावोपिनाभवत् ॥३४॥

गतागतेनयावद्वैबिंदुस्त्रावोपिनाभवत् ॥ तदावीराश्चतेसर्वेसाधुसाध्वितिवादिनः ॥ ३५ ॥ भानुर्धनुःसंगृहीत्वावीक्ष्यमीलितलोचनः ॥ आराच्चिक्षेपनाराचंसर्वेषांपश्यदांसतां ॥ ३६ ॥ सोपिपात्रंतदाभित्वापात्रंकृत्वाह्यधोमुखं ॥ पुनरूर्ध्वमुखंकृत्वातस्थौतत्रार्द्धनिःसृतः ॥ ३७ ॥ बाणवेगेनतदपिबिंदुस्त्रावोपिनाभवत् ॥ नपात्रंशकलीभूतंतदद्भुतमिवाभवत् ॥ ३८ ॥ एवंश्रीकृष्णपुत्रायेअष्टादशमहारथाः ॥ सर्वैतेर्बिभिदुःपात्रंजलस्त्रावोपिनाभवत् ॥ ३९ ॥ बिंदुदेशाधिपोराजादीर्घबाहुःसुविस्मितः ॥ तेभ्योऽदात्कन्यकाःसृष्टाअष्टादशसुलोचनाः ॥४०॥ तेषांविवाहसमयेशंखभेर्यानकादयः ॥ नेदुर्जगुश्चगंधर्वाननृतुश्चाप्सरोगणाः ॥४१॥ तेषामुपरिदेवारतेजयध्वनिसमाकुलाः ॥ ववृषुःपुष्पवर्षाणिचक्रुःश्लाघांदिविस्थिताः ॥ ४२ ॥ गजान्षष्टिसहस्राणिहयानामर्बुदंतथा ॥ दशलक्षंरथानांचदासीनांलक्षमेवच ॥ ४३ ॥ शिबिकानांचतुर्लक्षंपारिबर्हेददौनृपः ॥ ताःप्राहिणोद्द्वारवतींबभौकार्ष्णिर्यदूत्तमः ॥ ४४ ॥ दीर्घबाहुमनुप्राप्यनिषधान्प्रययौततः ॥ निषधाधिपतिर्वीरसेनजिन्नाममैथिल ॥४५॥ उपायनंददौसोपिप्रद्युम्नायमहात्मने ॥ तथाहिमद्राधिपतिःश्रीकृष्णेष्टोहरिप्रियः ॥ ४६ ॥ पूजयामाससबलंबृहत्सेनोहरेःसुतं ॥ माथुरान्शूरसेनांश्चमधून्प्रातःससैनिकः ॥ ४७ स्वागतैःपूजितःकार्ष्णिर्मथुरायांययौपुनः ॥ ततःप्रदक्षिणीकृत्यमथुरांसवनांकिल ॥४८॥ गोपान्गोपींयशोदांचनंदराजव्रजेश्वरं ॥ वृषभानूपनंदांश्चनत्वाकार्ष्णिर्बभौनृप ॥४९॥ बलिंचनंदराजायदत्त्वादत्त्वापुनःपुनः ॥ तैःपूजितःकतिदिनैस्थितोभून्नंदगोकुले ॥ ५० ॥ इतिश्रीमद्गर्गसंहितायांविश्वजित्खंडेनारदबहु० माथुरशूरसेनदेशविजयोनामाष्टादशोध्यायः ॥१८॥ नारदउवाच ॥ ॥ अथकार्ष्णिर्महाबाहुर्ध्वजिनीभिःसमन्वितः ॥ नादयन्दुंदुभीन्दीर्घान्दीर्घवेगःकुरून्ययौ ॥ १ ॥ विंशतिर्योजनानांचमर्यादीकृततद्वले ॥ तस्थौतच्छिबिराणांचविस्तारोदशयोजनं ॥ २ ॥ पंचयोजनमाश्रित्यतद्बलेराजपद्धतिः ॥ धनाढ्यानांचवैश्यानामापणानिसहस्रशः ॥ ३॥ तथारत्नपरीक्षाणांवस्त्रव्यापारकारिणां ॥ काचकारावायकाश्चरंगकाराःकुलालकाः ॥ ४ ॥

कंदकारास्तूलकाराःपटकारास्तथैवच ॥ टंककाराश्चित्रकाराःपत्रकाराश्चनापिताः ॥ ५ ॥ पट्टकाराहेतिकाराःपर्णकाराश्चशिल्पिनः॥
लाक्षाकारामालिनश्चरजकास्तैलिनस्तथा ॥ ६ ॥ तांबूलशोधिनस्तत्रचित्रपाषाणकर्मकाः ॥ अन्नभर्जकारास्तत्रकाचभेदिनएवहि

॥ ७ ॥ मुक्तादीनांचरत्नानांसूक्ष्माणांरत्नवेधिनः ॥ एतेकारूजनाःसर्वेदृश्यंतेराजपद्धतौ ॥ ८ ॥ क्वचिद्भानुमतीर्लीलाऐंद्रजाल
विधायकाः ॥ क्वचिन्नटाश्चनृत्यंतेयुद्धंमल्लकयोःक्वचित् ॥ ९ ॥ क्वचित्तुवानरीर्लीलाडमरूवाद्यसंयुताः ॥ गायंतिकुत्रचिद्राजन्सूत
मागधबंदिनः ॥ १० ॥ वारांगनाश्चनृत्यंतिभूषैर्द्वादशभिर्युताः ॥ दिव्यैःषोडशशृंगारैर्हरंत्यप्सरसांमनः ॥ ११ ॥ बन्धूनामपिसे
नानांमहातंकागजाह्वये ॥ चालनंसंभ्रमोपेतंविह्वलैश्चजनैरभूत् ॥ १२ ॥ विदुद्रुवुर्जनाःसर्वेगृहेष्वापातितार्गलाः ॥ कोलाहलो
महानासीद्गेहेगेहेजनेजने ॥ १३ ॥ वीर्य्यशौर्य्यबलोपेताःकौरवाश्चक्रवर्तिनः ॥ आसमुद्राःक्षितीशेंद्राजातास्तदपिशंकिताः॥१४॥
प्रद्युम्नप्रेषितःसाक्षादुद्धवोबुद्धिसत्तमः ॥ कौरवेंद्रपुरंप्राप्तोधृतराष्ट्रंददर्शह ॥ १५ ॥ मदच्युतामस्यनृपस्यदंतिनांकस्तूरिकाकुंकुमगं
डशालिनां ॥ सिंदूरशुंडाम्पदकर्णताडितैःषडंघ्रिभिर्मंडितमंदिराजिरं ॥ १६ ॥ यंभीष्मकर्णगुरुशल्यकृपैश्चभूरिबाल्हीकधौम्यशकु
नैःसहसंजयेन ॥ दुःशासनेनविदुरेणचलक्ष्मणेनदुर्योधनेनचकृपीसुतसोमदत्तैः ॥ १७ ॥ श्रीयज्ञकेतुसहितैःसहितंनृपेंद्रंलीलात
पत्रसितचामरहेमपीठैः ॥ संसेवितंपरिसमेत्यगजाव्हयेशंनत्वोद्धवःप्रणतआहकृतांजलिस्तं ॥ १८ ॥ उद्धवउवाच ॥ प्रद्युम्नेनप्र
कथितंशृणुराजेंद्रसत्तम ॥ उग्रसेनःक्षितीशेंद्रोयादवेंद्रोमहाबलः ॥ १९ ॥ विजित्यनृपतीन्सर्वान्राजसूयंकरिष्यति ॥ प्रेषितस्ते
नसेनाभिःप्रद्युम्नोरुक्मिणीसुतः ॥ २० ॥ जेतुंमहोद्भटान्वीराञ्जंबूद्वीपस्थितान्नृपान् ॥ चैद्यशाल्वजरासंधदंतवक्रादिभूपतीन् ॥ 
॥ २१ ॥ विजित्यचागतःकार्ष्णिस्तस्मैयच्छबलिंबहुं ॥ उपायनंचदातव्यंबंधूनामैक्यकाम्यया ॥ २२ ॥ माभूत्कुरूणांवृष्णीनां
कलिर्नोचेद्भविष्यति ॥ तेनोदितंमेकथितंतत्क्षमस्वनृपेश्वर ॥ २३ ॥ दूतस्यहीनदोषस्यत्वयोक्तंयद्ददामितत् ॥ नारदउवाच ॥

तच्छ्रुत्वाकौरवाःसर्वेराजन्संजातमन्यवः ॥ वीर्य्यशौर्य्यमदोन्नद्धाऊचुःप्रस्फुरिताधराः ॥ २४ ॥ कौरवाऊचुः ॥ दुरत्ययाकालग
तिरहोचित्रमिदंजगत् ॥ सिंहोपरिप्रधावंतिशृगालादुर्बलावने ॥ २५ ॥ अस्मत्सकाशात्संबंधाअस्मद्दत्तनृपासनाः ॥ दातॄणांप्रति
कूलास्तुदातॄणांफणिनोयथा ॥ २६ ॥ वृष्णयोभीरवःसर्वेयुधिविक्लवचेतसः ॥ तथैवशासनंकर्तुंप्रवृत्ताहिगतान्हियः ॥ २७ ॥ उग्र
सेनोऽल्पवीर्यश्चजंबूद्वीपस्थितान्नृपान् ॥ विजित्याहोबलिंनीत्वाराजसूयंकरिष्यति ॥२८॥ यत्रभीष्मश्चकर्णश्चद्रोणोदुर्योधनादयः
तत्रत्वंप्रेषितोमंत्रीप्रद्युम्नेनकुबुद्धिना ॥ २९ ॥ तस्माद्यातपुरीमध्येयूयंवैजविनेच्छया ॥ नचेद्यास्यथवःसर्वान्नयामोयमसादनं
॥ ३० ॥ नारदउवाच ॥ इत्थंश्रीकृष्णविमुखैःकौरवैःपरिभाषितम् ॥ श्रुत्वोद्धवःशंबरारिमेत्यसर्वमुवाचह ॥ ३१ ॥ कौरवोक्तंवचः
श्रुत्वाप्रद्युम्नोधन्विनांवरः ॥ प्रतिशार्ङ्गंसंगृहीत्वारोषात्प्रस्फुरिताधरः ॥ ३२ ॥ प्रद्युम्नउवाच ॥ कौरवान्घातयिष्यामिबंधूनपिम
दोद्धतान् ॥ बाणैस्तीक्ष्णैर्यथायोगीनियमैर्देहजारुजाः ॥ ३३ ॥ यदुनांसैन्यचक्रेषुबलिंयोनप्रदास्यति ॥ कौरवेभ्योपिसपुमान्नपि
तुर्मातुर्नचौरसः ॥ ३४ ॥ नारदउवाच ॥ तदैवयादवाःसर्वेभोजवृष्ण्यंधकादयः ॥ गजाह्वयंययुःसैन्यैराजन्संजातमन्यवः ॥३५॥
इतिश्रीमद्गर्गसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेकौरवोपाख्यानंनामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ नारदउवाच ॥
तदैवकौरवाःसर्वेनिर्गतादीप्तमन्यवः ॥ स्वैःस्वैर्बलैःसमायुक्तायोद्धुंप्रद्युम्नसंमुखे ॥ १ ॥ विजयध्वजसंयुक्तारत्नकंबलमंडिताः ॥
गजाःषष्टिसहस्राणिनिर्ययुःस्वर्णशृंखलाः ॥ २ ॥ प्रलयाब्धिमहावर्तसंघर्षध्वनिकारिणाम् ॥ गजाःषष्टिसहस्राणिदुंदुभीनांविनि
र्गताः ॥ ३ ॥ गजागावोबृहद्भल्लालोहकंचुकमंडिताः ॥ शिरस्त्रमौलिसंयुक्ताद्विलक्षाणिविनिर्ययुः ॥ ४ ॥ हेमकंकणकेयूरकिरीटवर
कुंडलाः ॥ गजस्थाश्वद्विलक्षाणिनिर्ययुःस्वर्णकंचुकाः ॥ ५ ॥ पीतकंचुकसंयुक्तास्तिर्यगुष्णीषशालिनः ॥ गजस्थाश्वद्विलक्षाणिसं
ग्रामेलब्धकीर्तयः ॥ ६ ॥ रक्तांबरधराःकेचिद्रक्तभूषणभूषिताः ॥ रक्तकंबलसंयुक्तैर्गजैरुच्चैर्विनिर्गताः ॥ ७ ॥ कृष्णांबरधरानागै

ग. सं. हैरिद्दस्त्रसमावृताः ॥ केचिच्छुक्लांबराःकेचिन्निर्ययुःपाटलांबराः ॥ ८ ॥ रथैश्चदेवधिष्ण्याभैर्मृगेंद्रध्वजशोभितैः ॥ पततपताकैर वि. ७
त्युच्चैर्निर्ययुःकोटिशोनृपाः ॥ ९ ॥ आंगैर्वांगैःसैंधवैश्चचंचलैस्तुरगैर्नृपाः ॥ मनोजवैःस्वर्णभूषैर्निर्ययुःशस्त्रसंवृताः ॥ १० ॥ समं अ. २०
॥२१॥ तान्निर्ययुर्वीरालोहकंचुकमंडिताः ॥ विद्याधरसमाराजन्संकुलायुद्धशालिनः ॥ ११ ॥ जगुर्यशःकौरवाणांसूतमागधबंदिनः ॥ भे
रीमृदंगैःपटहैरानकैर्युद्धनिःस्वनैः ॥ १२ ॥ मृगेंद्रध्वजसंयुक्तैःशुक्लवाहनियोजितैः ॥ व्यजनैर्वज्रदंडैश्चचामरांदोलिराजितैः ॥
॥ १३ ॥ चतुर्योजनमात्रेणचंद्रमंडलचारुणा ॥ छत्रेणमंडितेराजभिर्दत्तेनमनोहरे ॥ १४ ॥ दुर्योधनोबभौसैन्येमहतिस्यंदनेस्थि
तः ॥ तथाऽन्येधार्तराष्ट्राश्चस्यंदनेस्यंदनेस्थिताः ॥ १५ ॥ चतुर्योजनमात्रैश्चछत्रैर्मुक्ताविलंबिभिः ॥ सुरथेनातिभीष्मेणकृपेणगुरु
णासह ॥ १६ ॥ बाल्हीककर्णशल्यैश्चसोमदत्तेनधीमता ॥ अश्वत्थाम्नाचधौम्येनलक्ष्मणेनधनुष्मता ॥ १७ ॥ शकुनिनाचवीरेण
तथादुःशासनेनच ॥ संजयेनतथासाक्षाद्भूरिणायक्षकेतुना ॥ १८ ॥ सुयोधनोनृपोरेजेयथाशक्रोमरुद्गणैः ॥ इंद्रप्रस्थात्पांडुपुत्रैःप्रे
षितंप्रतिमाह्वयं ॥ १९ ॥ तदैवचागतंराजन्कौरवाणांसहायकृत् ॥ अक्षौहिणीभिःषोडशभिःकुरूणांचलतांतदा ॥ २० ॥ चचा
लभूर्दिशोनेदुरजोव्याप्तंनभोऽभवत् ॥ तारकेवबभौसूर्योगजाश्वरथरेणुभिः ॥ २१ ॥ अंधकारोभवद्भूमौदेवाःसर्वेपिशंकिताः ॥ यत्र
तत्रगजानांचचोदनाभिश्चभूरुहाः ॥ २२ ॥ निपेतुस्तुरगैर्वीरैःक्षणंभूखंडमंडलम् ॥ सेनाकुरूणांवृष्णीनांयुयुधुश्चपरस्परम् ॥ २३ ॥
तीक्ष्णैःशस्त्रैर्यथासप्तसमुद्रास्तरलैर्लये ॥ हयाहयेरिभाश्चेभैरथिनोरथिभिःसह ॥ २४ ॥ श्येनैःश्येनाइवक्रव्येपत्तयःपत्तिभिर्मृधे ॥
महामात्यैर्महामात्याःसूताःसूतैर्नृपैर्नृपाः ॥ २५ ॥ युयुधुःक्रोधसंयुक्ताःसिंहैःसिंहाइवौजसा ॥ खड्गैःकुंतैःशक्तिभिश्चभल्लैःपट्टिश ॥२१॥
मुद्गरैः ॥ २६ ॥ गदाभिर्मुसलैश्चक्रैस्तोमरैर्भिंदिपालकैः ॥ शतघ्नीभिर्भुशुंडीभिःकुठारैश्चस्फुरत्प्रभैः ॥ २७ ॥ चिच्छिदुर्बाणपटलैः
शिरांसिक्रोधमूर्च्छिताः ॥ बाणांधकारेसंजातेप्रद्युम्नोधन्विनांवरः ॥ २८ ॥ दुर्योधनेनयुयुधेधनुष्टंकारयन्मुहुः ॥ अनिरुद्धश्चभीष्म

णदीप्तिमांश्चकृपेणवै ॥ २९ ॥ भानुर्द्रोणेनसांबस्तुबाल्हीकेननृपेश्वरः ॥ मधुःकर्णेनचायुध्यद्बृहद्भानुःशलेनवै ॥ ३० ॥ चित्रभानुर्ह
रेःपुत्रःसोमदत्तेनधीमता ॥ अश्वत्थाम्नावृकश्चैवारुणोधौम्येनमैथिल ॥ ३१ ॥ पुष्करोलक्ष्मणेनाशुदुर्योधनसुतेनवै ॥ वेदबाहुः
कृष्णसुतःशकुनेनमहामृधे ॥ ३२ ॥ दुःशासनेनसमरेश्रुतदेवोहरेःसुतः ॥ तथाहियुयुधेयुद्धेसंजयेनसुनंदनः ॥ ३३ ॥ विदुरेणग
दःसाक्षात्कृतवर्माचभूरिणा ॥ अक्रूरोयुयुधेराजन्नाहवेयक्षकेतुना ॥ ३४ ॥ एवंपरस्परंयुद्धंबभूवतुमुलंमहत् ॥ कार्ष्णिर्विलोकया
मासदुर्योधनबलंमहत् ॥ ३५ ॥ बाणसंघेनवाराहोदंष्ट्रयाचयथार्णवं ॥ बाणसंभिन्नकुंभानांकरिणांप्रपतंतिखात् ॥ ३६ ॥ मुक्ताफ
लानिरेजुःकौरात्रौतारागणाइव ॥ बाणैःसंपातयामासरथिनःसारथीन्रथान् ॥ ३७ ॥ महामृधेमैथिलेंद्रवेगैर्वातोयथातरून् ॥
दुर्योधनस्तदाप्राप्तोधनुष्टंकारयन्मुहुः ॥ ३८ ॥ प्रद्युम्नंताडयामाससायकैर्दशभिर्मृधे ॥ तान्प्रचिच्छेदभगवान्प्रद्युम्नोयादवेश्वरः ॥
॥ ३९ ॥ दुर्योधनःपुनस्तस्यकवचेसायकान्दश ॥ निचखानस्वर्णपुंखान्भित्वावर्मतनौगताः ॥ ४० ॥ सहस्त्रैर्बाणपटलैःसहस्त्रा
श्वाञ्जघानह ॥ चिच्छेदबाणशतकैःकोदंडंसगुणंपरं ॥ ४१ ॥ शंबरारेर्महावीरोधृतराष्ट्रसुतोबली ॥ प्रद्युम्नस्तंरथंत्यक्त्वाथान्यमा
रुह्यसत्वरं ॥ ४२ ॥ कृष्णदत्तंधनुर्नीत्वासज्जंकृत्वाविधानतः ॥ एकंबाणंसमाधायकर्णांतंतच्चकर्षह ॥ ४३ ॥ भुजदंडस्यवेगेनत
द्रथेनिचकर्षह ॥ गृहीत्वातद्रथंबाणोभ्रामयित्वाघटीद्वयं ॥ ४४ ॥ आकाशात्पातयामासकमंडलुमिवार्भकः ॥ पतनेनरथःसद्यश्चू
र्णीभूतोबभूवह ॥ ४५ ॥ ससूताश्वहयाःसर्वेपंचतांप्रापुरग्रतः ॥ अन्यंरथंसमास्थायधार्तराष्ट्रोमहाबलः ॥ ४६ ॥ प्रद्युम्नंताडया
मासदशभिःसायकैर्मृधे ॥ तैस्ताडितोहरेःपुत्रोमालाहतइवद्विपः ॥ ४७ ॥ कृष्णदत्तेचकोदंडेतथैकंबाणमादधे ॥ बाणस्तंसरथंनी
त्वायावत्प्रागान्महांबरे ॥ ४८ ॥ तावद्बाणोद्वितीयोपितंगृहीत्वाययौत्वरम् ॥ तावत्तृतीयःसंप्राप्तोनीत्वातंमंदिराजिरे ॥ ४९ ॥ धृ
तराष्ट्रसमीपेचसरथंसाश्वसारथिम् ॥ आकाशात्पातयामासपद्मकोशमिवानिलः ॥५० ॥ बाणस्तंपातयित्वातुरणेकार्ष्णिंसमाययौ

ग. सं. ॥ ५१ ॥ पततेनविशीर्णोऽभूदंगारइवतद्रथः ॥ सुयोधनोमूर्छितोभूदुद्वमन्रुधिरंमुखात् ॥ ५२ ॥ इतिश्रीमद्गर्गसंहितायांविश्वजि वि. ७
त्खंडेनारदबहुलाश्वसंवादेकौरवयुद्धवर्णनंनामविंशोऽध्यायः ॥ २० ॥ ॥ नारदउवाच ॥ दुर्योधनेगतेतत्रहाहाकारोमहानभू
॥२२॥ त ॥ तदादेवव्रतोभीष्मोगांगेयःप्रययौत्वरं ॥ १ ॥ यदूनांपश्यतांतेषांधनुष्टंकारयन्मुहुः ॥ भस्मीकर्तुंयदुबलंवनंवह्निरिवज्वलन् ॥ अ. २१
॥ २ ॥ सर्वधर्मभृतांश्रेष्ठोमहाभागवतःकविः॥ वीरयूथाग्रणीर्येनरामोपियुधितोषितः ॥ ३ ॥ शिरस्त्रीमुकुटीगौरःसितश्मश्रुःपि
तामहः ॥ यथाषोडशवर्षीयोयुद्धांतंविचरन्बलात् ॥ ४ ॥ बाणैर्निपातयामासानिरुद्धस्यबलंमहत् ॥ करिणश्छिन्नशिरसोहयास्ते
भिन्नकंधराः ॥ ५ ॥ खड्गहस्ताभिन्नबाणैःपत्तयोपिद्विधाऽभवन् ॥ रथाश्चूर्णीकृतायेनहतसूताश्वनायकाः ॥ ६ ॥ अधोमुखाऊर्ध्वमु
खाश्छिन्नपादानृपात्मजाः ॥ खड्गहस्तधनुर्हस्ताःपतिताश्छिन्नबाहवः ॥ ७ ॥ केचिद्द्वैछिन्नकवचानिपेतुर्भूमिमंडले ॥ अश्वैर्वीरैरथै
र्नागैःपतितैःस्वर्णभूषितैः ॥ ८ ॥ युद्धमंडलमारेजेवनंवृक्षर्हतैर्यथा ॥ शस्त्रदंताबाणकेशाध्वजवस्त्राकरिस्तना ॥ ९ ॥ रथांगकुश
लाराजन्महामारीवभूर्बभौ ॥ क्षतजस्त्रावसंभूतारथाश्वनरवाहिनी ॥ १० ॥ आपगाभून्महादुर्गानरैर्वैतरणीयथा ॥ कूष्मांडोन्मा
दवेतालानदंतोभैरवंस्वनं ॥ ११ ॥ हरमालार्थमागत्यजगृहुर्नृशिरांसिच ॥ रथेनातिपताकेनानिरुद्धोधन्विनांवरः ॥ १२ ॥ स्वब
लंपतितंदृष्ट्वाप्रागाद्भीष्मंमृधेमहान् ॥ प्रलयाब्धिमहावर्तभीमसंघर्षनादिनीं ॥ १३ ॥ धनुर्ज्यातस्यचिच्छेदबाणेनैकेनकार्ष्णिजः॥
तुंडयातीक्ष्णयाराजन्गरुडःसर्पिणींयथा ॥ १४ ॥ भीष्मोऽन्यद्धनुरादायसज्जंकृत्वातदात्मवान् ॥ सर्वेषांपश्यतांतत्रब्रह्मास्त्रंसंदधे
मृधे ॥ १५ ॥ ततःप्रादुष्कृतंतेजःप्रचंडंवीक्ष्यमाधवः ॥ स्वबलस्यापिरक्षार्थंब्रह्मास्त्रंसंदधेस्वयं ॥ १६ ॥ द्वादशादित्यसंकाशेयुयु ॥२२॥
धातेपरस्परं ॥ त्रीँल्लोकान्दहतीदीपेनिरुद्धस्तंजहारह ॥ १७ ॥ गांगेयस्यापिकोदंडंतडिद्वर्णंयदूत्तमः ॥ चिच्छेदसायकैःसूर्योनी
हारमिवरश्मिभिः ॥ १८ ॥ भीष्मोगृहीत्वाथगदांलक्षभारमयींदृढां ॥ प्राहिणोदनिरुद्धायसिंहनादंतदाऽकरोत् ॥१९॥ गृहीत्वा

वामहस्तेनगरुत्मानिवपन्नगीं ॥ प्रद्युम्नोभगवान्साक्षात्प्राहिणोत्स्वगदांहृदि ॥ २० ॥ गदाप्रहारव्यथितोमूर्छितःपतितोरथात् ॥ ब
भौसूर्यौयथाकाशद्गांगेयोमृधमंडले ॥२१॥कृपाचार्योपितत्रैवानिरुद्धायमहात्मने ॥ शक्तिंचिक्षेपसहसारुषाप्रस्फुरिताधरः ॥ २२ ॥
दीप्तिमान्कृष्णपुत्रस्तुपथिचिच्छेदतांनृप ॥ खड्गेनशितधारेणकुवाक्येनेवमित्रतां ॥ २३ ॥ द्रोणाचार्योमहाबाहुर्भानूपरिरुषान्वितः ॥
चिक्षेपपार्वतंचास्त्रंधनुष्टंकारयन्मुहुः ॥ २४ ॥ पतंतःपर्वताव्योम्नश्चूर्णयंतोद्विषद्बलं ॥ तेषांपातेनराजेंद्रहाहाकारोमहानभूत् ॥ २५ ॥
तदाहरेःसुतोभानुर्वायव्यास्त्रंसमाददे ॥ तद्वातेनाद्रयःसर्वेउड्डीताह्यभवन्रणात् ॥ २६ ॥ बाल्हीकस्तुतदाक्रुद्धोवह्न्यस्त्रंसंदधेततः ॥
भस्मीभूतंबलंजातंवह्निनेवमहद्वनं ॥ २७ ॥ पार्जन्यमाददेतत्रसांबोजांबवतीसुतः ॥ तेनशांतिंग तोबह्निर्ज्ञानेनेवत्वहंकृतिः ॥२८॥
कर्णस्ततोमधुंहित्वासांबोपरिरुषान्वितः ॥ जघानबाणविंशत्याजगर्जघनवद्बली ॥ २९ ॥ तद्बाणैःसरथैःसांबोबभ्रामघटिकाद्वयं ॥
क्रोशंपुनःप्रपतितःकिंचिद्व्याकुलमानसः ॥३०॥पुनर्गदांसमादायरथंत्यक्त्वासमेत्यसः ॥ तताडगदयाकर्णंसांबोजांबतीसुतः ॥३१॥
गदाप्रहारव्याथितःपतितोधरणीतले ॥ मूर्च्छांप्रापरणेराजन्कर्णोवीरोमहाबलः ॥ ३२ ॥ सांबोपिस्वधनुर्नीत्वारथमारुह्यवेगतः ॥
शूलंजघानविंशत्यासोमदत्तंचपंचभिः॥३३॥द्रौणिंचदशभिर्बाणैर्धौम्यंषोडशभिस्तथा॥लक्ष्मणंदशभिस्तत्रशकुनिंपंचभिस्तथा ३४।
दुःशासनंचविंशत्याविंशत्यासंजयंपृथक् ॥ भूरिंबाणशतैराजन्यक्षकेतुंशतैःशितैः ॥ ३५ ॥ बाणैर्जघानसमरेजगर्जघनवद्बली ॥
दशभिर्दशभिर्नेतॄनेकैकेनगजान्हयान्॥३६॥पंचभिःपंचभिर्वीरान्बाणैःसांबस्तताडह॥वीक्ष्यजांबवतीसूनोःसांबस्यकरलाघवं ३७।
स्वेपरेसैनिकाःसर्वेविस्मयंपरमंगताः ॥ तदाभीष्मःसमुत्थायगृहीत्वाधनुरुत्तमं ॥ ३८ ॥ चिच्छेददशभिर्बाणैःसांबकोदंडमुत्तमं ॥
भीष्मोमहाबलोवीरोद्रोणाचार्यश्वसायकैः॥३९॥कर्णःसद्योयदुबलंजघ्नुर्ज्ञानंयथागुणाः ॥दुर्योधनःपुनर्योद्धुंरथमारुह्यमानदः॥४०॥
अक्षौहिणीभिर्दशभिर्न्नादयन्नाययौमृधे॥४१॥देवौपुराणौपुरुषौतदाविर्बभूवतुर्मैथिलरामकृष्णौ ॥सुपर्णतालध्वजशालियानौप्रद्योत

यंतौपरितौहिशस्तौ ॥४२॥तदाजयारावसमाकुलाःसुरागंधर्वमुख्याश्वजगुर्मनोहरं॥सुरानकादुंदुभयोविनेदुःश्रीलाजपुष्पैर्ववृषुःसु 
 रस्त्रियः॥४३॥तदैवनेमुर्यदवःपरेश्वरौदुर्योधनाद्याःकुरवस्तुसर्वतः॥ निधायशस्त्राणिददुर्बलिंपरंसर्वेप्रसन्नाःकृतहस्तसंपुटाः॥४४॥ 
 प्रद्युम्नमुख्यान्स्वसुतान्मदोद्धतान्निर्भर्त्स्यर्यवाग्भिःपरमेश्वरोहरिः॥प्रणम्यदेवव्रतमुख्यकौरवान्समेत्यदुर्योधनमूचतुःपरौ॥४५॥
श्रीरामकृष्णावूचतुः ॥ राजन्यदेभिःकिलबालबुद्धिभिस्तत्क्षम्यतांमाभवदुर्मनाःस्वतः ॥ यदातुकिंचित्परुषंप्रकीर्तितंप्रकीर्तितां
नौभवतांनृपेश्वर ॥ ४६ ॥ माभूत्कुरूणांभुवियादवानांकदापिकिंचित्कलिरेवराजन् ॥ संबंधिनोज्ञातयएवसर्वेनिचौलवस्त्रांतरव
त्प्रियार्थाः॥४७॥नारदउवाच॥पूजितौकुरुभिःशश्वद्रामकृष्णौसुरेश्वरौ॥प्रद्युम्नाद्यैःसयदुभीरेजतुर्मैथिलेश्वर ॥४८॥ इतिश्रीमद्गर्गसं
हि०वि०ना०कौ०मे०मेकविंशोध्यायः॥२१॥ ॥नारदउवाच॥दुर्योधनंशांतयित्वासानुजैःकुरुभिःसह॥जन्मतुःपांडवान्द्रष्टुमिंद्र
प्रस्थंयदुत्तमौ ॥ १ ॥ इंद्रप्रस्थात्ततोराजाजातशत्रुर्युधिष्ठिरः॥ भ्रातृभिःस्वजनैःसार्द्धंनेतुंकृष्णंसमाययौ ॥ २ ॥ शंखदुंदुभिनादे
नब्रह्मघोषेणवेणुभिः ॥ पुष्पवर्षंप्रकुर्वद्भिरिंद्रप्रस्थनिवासिभिः॥ रामकृष्णौपरिष्वज्यदोर्भ्यांराजायुधिष्ठिरः ॥ ३ ॥ परमांनिर्वृतिं
लेभेयोगीवानंदसंवृतः॥ प्रद्युम्नाद्याहरिसुताःप्रणेमुःश्रीयुधिष्ठिरं ॥ ४ ॥ युधिष्ठिरोनुजग्राहकराभ्यांतान्कृताशिषः॥ अर्जुनंभीम
सेनंचपरिरभ्यहरिःस्वयं ॥ ५ ॥ पप्रच्छकुशलंतेषांयमाभ्यांचाभिवंदितः॥ परिपूर्णतमौसाक्षाच्छ्रीकृष्णौचस्वयंहरिः ॥ ६ ॥ अ
संख्यब्रह्मांडपतीहरिदासेनपूजितौ ॥ प्रस्थाप्ययदुमुख्यांश्चप्रद्युम्नादीन्ससैनिकान् ॥ ७ ॥ समग्रांजगतींजेतुंचाज्ञांदत्त्वाविधान
तः॥ मिलित्वासानुजंधर्मंसर्वेशौभक्तवत्सलौ ॥ ८ ॥ द्वारकांजग्मतूराजन्गौरश्यामौमनोहरौ ॥ इत्थंश्रीकृष्णचरितंमयातेकथि 
तंनृप ॥ ९ ॥ चतुष्पदार्थदंनृणांकिंभूयःश्रोतुमिच्छसि ॥ बहुलाश्वउवाच ॥ कुशस्थलींगतेकृष्णेसबलेपुरुषोत्तमे ॥ १० ॥ ततश्च
कारकिंसाक्षात्प्रद्युम्नोभगवान्हरिः ॥ अद्भुतंतस्यचरितंश्रवणीयंमनोहरं ॥ ११ ॥ मुक्तानामपिभक्तानांजिज्ञासूनांपुनःकिमु ॥ अ

र्थार्थिनामर्थदंसदार्तानामार्तिनाशनं ॥ १२ ॥ चतुर्विधानांजीवानांसर्वेषांपापनाशनं ॥ कथंदिग्विजयंकृत्वादिग्जयार्थीहरेःसुतः
॥ १३ ॥ आजगामपुनःसैन्यैरेतन्मेवदतत्त्वतः ॥ देवर्षेत्वंब्रह्मसुतोभगवान्सर्वदर्शनः ॥ श्रीकृष्णस्यमनःपूर्वंतस्मैतेहरयेनमः ॥
॥ १४ ॥ नारदउवाच ॥ साधुपृष्टंत्वयाराजन्धन्यस्त्वंतत्प्रभवित् ॥ श्रीकृष्णचरितंश्रोतुंपात्रंत्वमसिभूतले ॥ १५ ॥ कृष्णेया
तेजातशत्रूरक्षार्थंस्नेहतोनृप ॥ शत्रुभ्यःशंकितःकार्ष्णिप्रायुङ्क्ताशुकिरीटिनं ॥ १६ ॥ अथकार्ष्णिर्यदुश्रेष्ठःफाल्गुनेनसमंनृप ॥ विक
र्षन्महतींसेनांत्रिगर्तान्प्रययौत्वरं ॥ १७ ॥ त्रिगर्ताधीश्वरोधन्वीसुशर्मातेनशंकितः ॥ उपायनंददौतस्मैप्रद्युम्नायमहात्मने ॥
॥ १८ ॥ विराटेनतथाराज्ञापूजितोयादवेश्वरः ॥ सरस्वतींनदींस्नात्वाकुरुक्षेत्रंददर्शह ॥ १९ ॥ पृथूदकंबिंदुसरस्त्रितंकूपंसुदर्शनं॥
स्नात्वासरस्वतींप्रागाद्दत्वादानान्यनकेशः ॥२० ॥ सारस्वताधिपोराजाकुशांबोनददौबलिं ॥ कौशांबीनगरीमेत्यदुर्योधनवशानुगः
॥ २१ ॥ चारुदेष्णःसुदेष्णश्चचारुदेहश्चवीर्यवान् ॥ सुचारुश्चारुगुप्तश्चभद्रचारुस्तथाऽपरः ॥ २२ ॥ चारुचंद्रोविचारुश्चचारुश्च
दशमस्तथा ॥ रुक्मिणीनंदनाह्येतेप्रद्युम्नेनप्रणोदिताः ॥ २३ ॥ सिंधुदेशहयारूढाःसर्वेषांपश्यतांगताः ॥ कौशांबींनगरीमेत्यरुरु
धुःसर्वतस्तदा ॥ २४ ॥ बाणैःप्रासादशिखराध्वजकुंभादितोलिकाः ॥ चूर्णीभूतानिपेतुःकौलंकाट्टालायथामृगैः ॥ २५ ॥ बाणांध
कारेचकृतेरुक्मिणीनंदनैर्यदा ॥ तदोपायनपाणीःसन्कुशांबोनिर्गतःपुरात् ॥ २६ ॥ कृतांजलिःशंबरारिंदत्त्वानत्वाबलिंबहुं ॥ जु
गोपनगरींराजाभयार्तोभयविव्हलः ॥ २७ ॥ तदैवसौवीरपतिःसुदेवआभीरनाथोपिविचित्रनामा ॥ चित्रांगदःसिंधुपतिर्महौजाः
काश्मीरपोजांगलपःसुमेरुः ॥ २८ ॥ लाक्षेश्वरोधर्मपतिर्बिडौजागांधारमुख्योपिसुयोधनस्य ॥ वशेस्थितास्तेपिभयात्किलैतेदत्त्वा
बलिंनेमुरतीवकार्ष्णिं ॥ २९ ॥ ययौकार्ष्णिर्महाबाहुःस्वसैन्यपरिवारितः ॥ अर्बुदान्म्लेच्छदेशांश्चजेतुंकल्किरिवोद्भटः ॥ ३० ॥
कालस्यापिसुतश्चंडोयवनेंद्रोमहाबलः ॥ कार्ष्णिसमागतंश्रुत्वासंमुखात्कोपपूरितः ॥ ३१ ॥ पितृहंतुःसुतंहत्वायास्याम्यपचितिं

 पितुः ॥ इत्थंविचार्य्यमनसाम्लेच्छानांदशकोटिभिः ॥३२॥ मदच्युतंप्रोन्नदत्तंगजमारुह्यरक्तदृक् ॥ निर्ययौसंमुखेयोद्धुंप्रद्युम्नस्यम 
हात्मनः ॥ ३३ ॥ आगतांमहतींसेनांशितबाणप्रवर्षिणीं ॥ चंडप्रणोदितांदृष्ट्वाप्रद्युम्नोवाक्यमब्रवीत् ॥ ३४ ॥ प्रद्युम्नउवाच ॥ सेनां
 हत्वापिहश्चंडंशिरस्त्रसाहितंशिरः ॥ आनेष्यतेतंस्वबलेकरिष्यामिध्वजापतिं ॥ ३५ ॥ नारदउवाच ॥ एवंकार्ष्णौवदत्यारात्फाल्गु 
नोवानरध्वजः ॥ एकोविवेशगांडीवीधनुष्टंकारयन्मुहुः ॥ ३६ ॥ वीरान्रथान्गजानश्वान्समुखस्थान्द्विधाकरोत् ॥ गांडीवमुक्तै
र्विशिखैर्गांडीवीरणदुर्मदः ॥ ३७ ॥ केचिच्छिन्नभुजाःपेतुःशक्तिखड्गर्ष्टिपाणयः ॥ भिन्नपादाभिनन्नखाःकेचिद्वीराःसकंचुकाः ॥ ३८ ॥
दुद्रुवुःकरिणोयुद्धेभिन्नकक्षाश्वसक्षताः ॥ गतघंटाःश्लथन्नीडाःपातयंतःकरैर्गजान् ॥ ३९ ॥ जिष्णुबाणैर्द्विधाभूतैर्गजैरश्वैरणांगणं ॥
बभौक्षेत्रंशंकुलयाकूष्मांडशकलैरिव ॥ ४० ॥ तदैवदुद्रुवुर्म्लेच्छास्त्यक्त्वास्वंस्वंरणांगणं ॥ नभोर्करश्मिसंभिन्नानीहारपटला
इव ॥ ४१ ॥ गजारूढोम्लेच्छपतिःशक्तिंचिक्षेपजिष्णवे ॥ भ्रामयित्वामैथिलेंद्रसिंहनादमथाकरोत् ॥ ४२ ॥ विद्युल्लतामिवा
यांतींबाणैःकृष्णसखोबली ॥ गांडीवमुक्तैराजेंद्रलीलयाशतधाऽच्छिनत् ॥ ४३ ॥ यावच्चंडोमहाम्लेच्छोधनुर्जग्राहरोषतः ॥ ताव
च्चिच्छेदगांडीवीबाणेनैकेनलीलया ॥ ४४ ॥ द्वितीयंधनुरादायसचंडश्चंडविक्रमः ॥ प्रलयाब्धिमहावर्तभीमसंघर्षनादिनीं ॥४५॥
चिच्छेदसिंजनींजिष्णोर्गरुत्मानिवपन्नगीं ॥ बीभत्सुःस्वमसिंनीत्वास्फुरंतंचर्मणासह ॥४६॥ जघानतद्गजंकुंभेशैलमिंद्रोयथापविः ॥
अग्निदत्तेनखड्गेनभिन्नकुंभोगजोनदन् ॥४७॥ जानुभ्यांधरणींस्पृष्ट्वाकश्मलंपरमंययौ ॥ चंडःखड्गंगृहीत्वाथप्राहत्यपांडुनंदनं ॥४८॥
तत्खड्गंचर्मणोन्नीयप्राहिणोत्तंकुरूद्वहः ॥ सशिरस्त्रंशिरस्तस्यदेहाद्भिन्नंबभूवह ॥ ४९ ॥ सज्जंकृत्वाधनुर्जिष्णुर्निधायविशिखेचत 
त् ॥ आकृष्यपातयामासप्रद्युम्नस्यबलेमहत् ॥ ५० ॥ तदादुंदुभिनादोभूज्जयारावसमाकुलः ॥ अर्जुनस्योपरिसुराःपुष्पवर्षंप्रच
क्रिरे ॥ ५१ ॥ तदैवकार्ष्णिःसबलस्यजिष्णुंचकारनाथंविजयध्वजस्य ॥ संवीज्यमानंसितचामराद्यैःकपिध्वजंयादववृंदमुख्यैः ॥

॥ ९२ ॥ वेगवानर्बुदावीशः प्रद्युम्नंशरणंगतः ॥ उपायनंददौभिरुर्नमस्कृत्यकृतांजलिः ॥ ९३ ॥ मौरंगेशोमंदहासोहयानांदशल
क्षकं ॥ दत्त्वाभीरुर्नमश्चक्रेप्रद्युम्नायमहात्मने ॥ ९४ ॥ इत्थंखंडंभारताख्यंजित्वाकार्ष्णिर्यदूत्तमः ॥ हिमाद्रिंदक्षिणीकृत्यप्रागुदीचीं
दिशंययौ ॥ ९५ ॥ इतिश्रीमद्गर्गसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेदिग्विजयोनामद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ना
रदउवाच ॥ नदानद्यःसमुद्राश्चरथवीथिंददुर्नृप ॥ धर्षितास्तेजसातस्मैससैन्यायमहात्मने ॥ १ ॥ कैलासगिरिपार्श्वेचवरवरिश्च
मानुषः ॥ बाणस्यशोणितपुरंप्रययौयादवेश्वरः ॥२॥ बाणासुरोऽतिसंक्रुद्धोयदून्वीक्ष्यागतान्पुनः ॥ अक्षौहिणीभिर्द्वादशभिर्युद्धंकर्तुं
मनोदधे ॥ ३ ॥ तदैवसाक्षात्पुरुषःपुराणोमहेश्वरोनंदिवृषस्थितोऽसौ ॥ हिमाद्रिपुत्रीसहितस्त्रिशूलीसमेत्यबाणंनृपमाहदेवः ॥४॥
शिवउवाच ॥ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयं ॥ असंख्यब्रह्मांडपतिर्गोलोकेशःपरात्पर ॥ ५ ॥ त्रयोवयंतत्कलाहिब्रह्म
विष्णुशिवादयः ॥ मूर्ध्न्याज्ञांयस्यबिभ्रतित्वादृशानांचकाकथा ॥ ६ ॥ तस्यपौत्रस्त्वयाबद्धोनिरुद्धोयेनतेजसा ॥ छिन्नाभुजानजा
नासिसंग्रामेतंहरिःस्वयं ॥ ७ ॥ तस्मात्तेषांदानवानांपूजनीयाहरेःसुताः ॥ अनिरुद्धःपूजनीयोजामातातेनसंशयः ॥ ८ ॥ नददा
मित्वनुज्ञांतेयुद्धायासुरपुंगव ॥ नचेद्युद्धंकुरुबलाद्वृथादृष्टंमनस्तव ॥ ९ ॥ नारदउवाच ॥ शिवप्रबोधितोबाणोनिरुद्धंधन्विनांवरं ॥
समाहूयचसंपूज्यपारिबर्हंददौपुनः ॥ १० ॥ ससैन्यंसादरेणापिप्रद्युम्नंपूज्यबंधुवत ॥ गजायुतंचाश्वकोटिंरथानांपंचलक्षकं ॥११॥
ददौबाणोमहाबाहुःप्रद्युम्नायमहात्मने ॥ अथकार्ष्णिर्महाराजस्वसैन्यैर्यदुभिःसह ॥१२॥ अलकांप्रययौधन्वीपुरींगुह्यकमंडितां ॥
श्रीनंदालकनंदाभ्यांगंगाभ्यांपरिखीकृता ॥ १३ ॥ रत्नसोपानयुक्ताभ्यांयज्ञिभिःपरिशोभितां ॥ विद्याधरीभिःपरितःकिन्नरीभि
र्मनोहरां ॥ १४ ॥ दिव्याभिर्नागकन्याभिःपुरींभोगवतीमिव ॥ धनदोनददौतस्मैप्रद्युम्नायबलिंनृपः ॥ १५ ॥ हरेःप्रभावविदपि
विष्णोर्मायाबलंत्वहो ॥ लोकपालोऽस्म्यहंनित्यमित्यज्ञानविमोहितः ॥ १६ ॥ नोदितोबलिभिर्यक्षैर्युद्धंकर्तुंमनोदधे ॥ निर्धनोहि

घनंप्राप्यतृणवन्मन्यतेजगत् ॥१७॥ नवानांतुनिधीनांकोपतीनांकिमुवर्णनं ॥ तदैवहेममुकुटोदूतोधनदनोदितः ॥कार्ष्णिमेत्यसभा
मध्येनत्वेदंप्राहमानदः॥१८॥हेममुकुटउवाच॥धनेश्वरोराजराजोलोकपालोऽलकेश्वरः॥तेनयत्कथितंराजञ्छृणुत्वंतद्यदूत्तम॥१९॥
देवराजोयथाशक्रःस्मृतोदिवियथाप्रभुः ॥ तथैकोराजराजोहंकथितोभूतलेमहान् ॥ २० ॥ मनुष्यधर्मोराजेंद्रैःपूजितोहंसदाभु
वि ॥ उग्रसेनेनदातव्यंमह्यंसोपायनंपरं ॥ २१ ॥ पराकृतस्मैनदास्यामियदुराजायभूभृते ॥ नमन्यसेचेत्संग्रामंकरिष्यामिनसं
शयः ॥ २२ ॥ नारदउवाच ॥ एवंदूतवचःश्रुत्वाप्रद्युम्नोभगवान्हरिः ॥ चकारकोपंरक्ताक्षोरुषाप्रस्फुरिताधरः ॥ २३ ॥ प्रद्युम्न
उवाच ॥ वृष्णींद्रंराजराजेंद्रंराजराजोनवेत्तितं ॥ शक्रादीनांतुयःसाक्षान्मुकुटैर्घृष्टपादुकः ॥ २४ ॥ सुधर्मांपारिजातंचतस्माइंद्रो
ददौभयात् ॥ श्यामवर्णान्हयान्पाशीतस्मैदत्त्वाननामह ॥ २५ ॥ अनेनराजराजेनभीरुणानिधयोनव ॥ प्राप्तास्तंहिनजानाति
राजराजोमहाबलं ॥ २६ ॥ वर्ततेतत्सभामध्येपरिपूर्णतमोहरिः ॥ असंख्यब्रह्मांडपतिःश्रीकृष्णोभगवान्स्वयं ॥ २७ ॥ यस्यैक
मूर्ध्नितिलकंदृश्यतेमंडलंभुवः ॥ उग्रसेनसभामध्येसोपिनित्यंविराजते ॥ २८ ॥ उग्रसेनप्रेषितोहंकुबेरायमहात्मने ॥ नाराचा
नांबलिंदातुंतत्करिष्यामिसांप्रतं ॥ २९ ॥ नारदउवाच ॥ एवमुक्त्वागृहीत्वास्वंकोदंडंचंडविक्रमः ॥ चकारभुजदंडाभ्यांटंकारं
वादयन्गुणं ॥ ३० ॥ प्रत्यंचास्फोटनेनैवमंडितोभूत्तडित्स्वनः ॥ ननादतेनब्रह्मांडंसप्तलोकैर्बिलैःसह ॥ ३१ ॥ विचेलुर्दिग्गजा
स्ताराराजन्भूखंडमंडलं ॥ निषंगाच्छरमाकृष्यप्रद्युम्नोधन्विनांवरः ॥ ३२ ॥ प्रतिशार्ङ्गेस्वधनुषिबाणमेकंसमादधे ॥ द्वादशादित्य
संकाशंद्योतयन्मंडलंदिशां ॥ ३३ ॥ चिच्छेदगुह्यकेशस्यबाणंछत्रंचचामरे ॥ तदाक्रुद्धोराजराजोदृष्ट्वाचित्रमिदंमहत् ॥ ३४ ॥ आ
रुह्यपुष्पकंसैन्यैर्युद्धकामोविनिर्ययौ ॥ घंटानादेनयक्षेणमंत्रिणापार्श्वमौलिना ॥ ३५ ॥ नलकूबरमणिग्रीवौशुशुभातेध्वजाग्रतः ॥
तुरंगवदनाःकेचिन्मृगेंद्रवदनाःपरे ॥ ३६ ॥ शिशुमारमुखाःकेचित्केचिन्नक्रमुखाइव ॥ अर्धपिंगाअर्द्धकृष्णाउर्ध्वकेशामदोत्कटाः ॥

॥ ३७ ॥ वक्रदंतालललज्जिह्वाबृहद्दंष्ट्रामहाबलाः ॥ करालास्याःसकवचाःखड्गचर्मधराःपराः ॥ ३८ ॥ शक्तिहस्ताऋष्टिहस्ताभुशुंडि
परिघायुधाः ॥ धनुर्बाणधरायक्षाःकेचित्परशुपाणयः ॥ ३९ ॥ यक्षाणांहस्तिवाहानांरथिनामश्विनांतथा ॥ विरेजुर्निर्गतानांचमं
डलानिसहस्रशः ॥ ४० ॥ शंखदुंदुभिनादैश्चसूतमागधबंदिभिः ॥ रेजिरेश्रीदवीराःकौमेघाइवतडित्स्वनैः ॥ ४१ ॥ एवंयक्षेषुस
त्तेषुकोटिशोनिर्गतेषुच ॥ दिव्यान्महायोगमयात्सिद्धक्षेत्राद्विदेहराट् ॥ ४२ ॥ आययौतत्सहायार्थंप्रमथानांबलंमहत् ॥ भूताश्च
प्रमथाःकेचित्करालास्यामदोत्कटाः ॥ ४३ ॥ डाकिन्योयातुधानाश्चवेतालाःसविनायकाः ॥ कूश्मांडोन्मादसंयुक्ताःप्रेतामातृगणाः
परे ॥ ४४ ॥ निशाचरपिशाचाश्चब्रह्मराक्षसभैरवाः ॥ नदंतोभैरवंनादंछिंधिभिंधीतिवादिनः ॥ ४५ ॥ इत्थंतुभूतावलयःकोटिश
श्चाययुस्तदा ॥ रोदस्याच्छादितेभूतामेघैःसांवर्तकैरिव ॥ ४६ ॥ मयूरस्थःकार्तिकेयोमूषकस्थोगणेश्वरः ॥ प्रमथैर्गीयमानौतौढ
क्कावादित्रनिःस्वनैः ॥ ४७ ॥ सर्वेषामग्रतःप्राप्तौवीरभद्रेणसंयुतौ ॥ इत्थंपुण्यजनानांतुगणानांयदुभिःसह ॥ ४८ ॥ बभूवतुमुलं
युद्धमद्भुतंरोमहर्षणं ॥ रथिनोरथिभिस्तत्रपत्तिभिःसहपत्तयः ॥ ४९ ॥ हयाहयैरिभाश्चेभैर्युयुधुस्तेपरस्परं ॥ रथेभाश्वपदातीनांच
रणैरुत्थितंरजः ॥ ५० ॥ छादयामासराजेंद्रससूर्यंव्योममंडलं ॥ ५१ ॥ इतिश्रीमद्गर्गसंहितायांविश्वजित्खंडेनारदबहुलाश्वसं
वादेयक्षदेशप्रयाणंनामत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ नारदउवाच ॥ शस्त्रांधकारेसंजातेमणिग्रीवोमहाबलः ॥ बिभेदारिबलं
बाणैःकुवाक्यैर्मित्रतामिव ॥ १ ॥ मणिग्रीवस्यबाणौघैर्गजाश्वरथपत्तयः ॥ निपेतुःसक्षताभूमौवृक्षावातहताइव ॥ २ ॥ चंद्रभानु
र्हरेःपुत्रःसत्यभामात्मजोबली ॥ मणिग्रीवस्यकोदंडंपंचबाणैस्तदाऽच्छिनत् ॥३॥ दशभिस्तद्रथंछित्वाजगर्जघनवद्बली ॥ मणिग्री
वोपिचिक्षेपशक्तिंस्वांचंद्रभानवे ॥ ४ ॥ भासयंतींदिशःशश्वन्महोल्कामिवमैथिल ॥ अग्रहीच्चंद्रभानुस्तांवामहस्तेनलीलया ॥५॥
तयाजघानसमरेमणिग्रीवंमहाबलं ॥ पुनर्जगर्जसमरेचंद्रभानुर्महाबलः ॥६ ॥तत्प्रहारेणपतितेमणिग्रीवेप्रमूर्च्छिते ॥ चंद्रभानुंबाण

लक्ष्मणः ॥ शूरोदाशरथिस्त्राताकौशल्यानंदवर्द्धनः ॥ सौमित्रिर्भरतोधन्वीशत्रुघ्नःशत्रुतापनः ॥ निषंगीकवचीखड्गीशरीज्याहतकोष्ठ
कः ॥ २९ ॥ बद्धगोधांगुलित्राणःशंभुकोदंडभंजनः ॥ यज्ञत्रातायज्ञभर्तामारीचवधकारकः ॥ ३० ॥ असुरारिस्ताटकारिर्विभी
षणसहायकृत् ॥ पितृवाक्यकरोहर्षीविराधारिर्वनेचरः ॥ ३१ ॥ मुनिर्मुनिप्रियश्चित्रकूटारण्यनिवासकृत् ॥ कबंधहादंडकेशोरा
मोराजीवलोचनः ॥ ३२ ॥ मतंगवनसंचारीनेतापंचवटीपतिः ॥ सुग्रीवःसुग्रीवसखोहनुमत्प्रीतमानसः ॥३३॥ सेतुबंधोरावणारि
र्लंकादहनतत्परः ॥ रावण्यरिःपुष्पकस्थोजानकीविरहातुरः ॥ ३४ ॥ अयोध्याधिपतिःश्रीमाँल्लवणारिःसुरार्चितः ॥ सूर्यवंशी
चंद्रवंशीवंशीवाद्यविशारदः ॥ ३५ ॥ गोपतिर्गोपवृंदेशोगोपोगोपीशतावृतः ॥ गोकुलेशोगोपपुत्रोगोपालोगोगणाश्रयः ॥ ३६ ॥ पूतनारि
र्बकारिश्चतृणावर्तनिपातकः ॥ अघारिर्धेनुकारिश्चप्रलंबारिर्व्रजेश्वरः ॥ ३७ ॥ अरिष्टहाकेशिशत्रुर्व्योमासुरविनाशकृत् ॥ अग्निपानो
दुग्धपानोवृंदावनलताश्रितः ॥ ३८ ॥ यशोमतीसुतोभव्योरोहिणीललितःशिशुः ॥ रासमंडलमध्यस्थोरासमंडलमंडनः ॥ ३९ ॥
गोपिकाशतयूथार्थीशंखचूडवधोद्यतः ॥ गोवर्द्धनसमुद्धर्ताशक्राजिद्व्रजरक्षकः ॥ ४० ॥ वृषभानुवरोनंदआनंदोनंदवर्धनः ॥ नंद
राजसुतःश्रीशःकंसारिःकालियांतकः ॥ ४१ ॥ रजकारिर्मुष्टिकारिःकंसकोदंडभंजनः ॥ चाणूरारिःकूटहंताशलारिस्तोशलांतकः ॥
॥ ४२ ॥ कंसभ्रातृनिहंताचमल्लयुद्धप्रवर्तकः ॥ गजहंताकंसहंताकालहंताकलंकहा ॥ ४३ ॥ मागधारिर्यवनहापांडुपुत्रसहायकृत् ॥ चतु
र्भुजःश्यामलांगःसौम्यश्चौपगविप्रियः ॥ ४४ ॥ युद्धभृदुद्धवसखामंत्रीमंत्रविशारदः ॥ वीरहावीरमथनःशंखचक्रगदाधरः ॥ ४५ ॥
रेवतीचित्तहर्ताचरेवतीहर्षवर्द्धनः ॥ रेवतीप्राणनाथश्चरेवतीप्रियकारकः ॥ ४६ ॥ ज्योतिर्ज्योतिष्मतीभर्तारैवताद्रिविहारकृत् ॥
धृतिनाथोधनाध्यक्षोदानाध्यक्षोधनेश्वरः ॥ ४७ ॥ मैथिलार्चितपादाब्जोमानदोभक्तवत्सलः ॥ दुर्योधनगुरुर्गुर्वीगदाशिक्षाकरः
क्षमी ॥ ४८ मुरारिर्मदनोमंदोनिरुद्धोधन्विनांवरः ॥ कल्पवृक्षःकल्पवृक्षीकल्पवृक्षवनप्रभुः ॥ ४९ ॥ स्यमंतकमणिर्मान्योगांडी

ग. सं. वीकौरवेश्वरः ॥ कुभांडखंडनकरःकूपकर्णप्रहारकृत् ॥ ५० ॥ सेव्योरैवतजामातामधुमाधवसेवितः ॥ बलिष्टपुष्टसर्वांगोहृष्टःपुष्टः ब. ८
प्रहर्षितः ॥ ५१ वाराणसीगतःक्रुद्धःसर्वःपौंड्रकघातकः ॥ सुनंदीशिखरीशिल्पीद्विविदांगनिषूदनः ॥ ५२ ॥ हस्तिनापुरसंकर्षीर
॥१२॥ थीकौरवपूजितः ॥ विश्वकर्माविश्वधर्मादेवशर्मादयानिधिः ॥ ५३ ॥ महाराजच्छत्रधरोमहाराजोपलक्षणः ॥ सिद्धगीतःसिद्धक अ. १३
थःशुक्लचामरवीजितः ॥ ५४ ॥ ताराक्षःकीरनासश्चबिंबोष्ठःसुस्मितच्छविः ॥ करींद्रकरदोर्दंडःप्रचंडोमेघमंडलः ॥ ५५ ॥ कपाट
वक्षाःपीनांसःपद्मपादस्फुरद्द्युतिः ॥ महाविभूतिर्भूतेशोबंधमोक्षीसमीक्षणः ॥ ५६ ॥ चैद्यशत्रुःशत्रुसंधोदंतवक्रनिषूदकः ॥ अजा
तशत्रुःपापघ्नोहरिदाससहायकृत् ॥ ५७ ॥ शालबाहुःशाल्वहंतातीर्थयायीजनेश्वरः ॥ नैमिषारण्ययात्रार्थीगोमतीतीरवासकृत् ॥
॥ ५८ ॥ गंडकीस्नानवान्स्रग्वीवैजयंतीविराजितः ॥ अम्लानपंकजधरोविपाशीशोणसंप्लुतः ॥ ५९ ॥ प्रयागतीर्थराजश्चसप्त
पूःसेतुबंधनः ॥ गयाशिरश्चधनदःपौलस्त्यःपुलहाश्रमः ॥ ६० ॥ गंगासागरसंगार्थीसप्तगोदावरीपतिः ॥ वेणीभीमरथीगोदा
ताम्रपर्णीवटोदका ॥ ६१ ॥ कृतमालामहापुण्याकावेरीचपयस्विनी ॥ प्रतीचीसुप्रभावेणीत्रिवेणीसरयूपमा ॥ ६२ ॥ कृष्णापंपा
नर्मदाचगंगाभागीरथीनदी ॥ सिद्धाश्रमःप्रभासश्चबिन्दुर्बिन्दुसरोवरः ॥ ६३ ॥ पुष्करःसैंधवोजंबूनरनारायणाश्रमः ॥ कुरुक्षेत्र
पतीरामोजामदग्न्योमहामुनिः ॥६४॥ इल्वलात्मजहंताचसुदामासौख्यदायकः ॥ विश्वजिद्विश्वनाथश्चत्रिलोकविजयीजयी॥६५॥
वसंतमालतीकर्षीगदोगद्योगदाग्रजः ॥ गुणार्णवोगुणनिधिर्गुणपात्रीगुणाकरः ॥ ६६ ॥ रंगवल्लीजलाकारोनिर्गुणःसगुणोबृहत् ॥
दृष्टःश्रुतोभवद्भूतोभविष्यच्चाल्पविग्रहः ॥ ६७ ॥ अनादिरादिरानंदःप्रत्यग्धामानिरंतरः ॥ गुणातीतःसमःसाम्यःसमदृक्निर्विक
ल्पकः ॥ ६८ ॥ गूढाव्यूढोगुणोगौणोगुणाभासोगुणावृतः ॥ नित्योक्षरोनिर्विकारोक्षरोजस्रसुखोऽमृतः ॥ ६९ ॥ सर्वगःसर्ववित्सा ॥१२॥
र्थःसमबुद्धिःसमप्रभः ॥ अक्लेद्योच्छेद्यआपूर्णोशोष्योदाह्योनिवर्तकः ॥ ७० ॥ ब्रह्मब्रह्मधरोब्रह्माज्ञापकोव्यापकःकविः ॥ अध्य

णिकःस्मृतिकरोवैद्योविद्याविशारदः ॥ ९२ ॥ अलंकारोलक्षणार्थोऽव्यंग्यविद्धनवद्ध्वनिः ॥ वाक्यस्फोटःपदस्फोटःस्फोटवृत्तिश्च
सार्थवित् ॥ ९३ ॥ शृंगारउज्ज्वलःस्वच्छोऽद्भुतोहास्योभयानकः ॥ अश्वत्थोयवभोजीचयवक्रीतोयवाशनः ॥९४॥ प्रह्लादरक्ष
कःस्निग्धऐलवंशविवर्द्धनः ॥ गताधिरंबरीषांगोविगाधिर्गाधिनांवरः ॥ ९५ ॥ नानामणिसमाकीर्णोनानारत्नविभूषणः ॥ नानापु
ष्पधरःपुष्पीपुष्पधन्वाप्रपुष्पितः ॥ ९६ ॥ नानाचंदनगंधाढ्योनानापुष्परसार्चितः ॥ नानावर्णमयोवर्णोनानावस्त्रधरःसदा॥९७॥
नानापद्मकरःकौशीनानाकौशेयवेषधृक् ॥ रत्नकंबलधारीचधौतवस्त्रसमावृतः ॥ ९८ ॥ उत्तरीयधरःपर्णोघनकंचुकसंघवान् ॥
पीतोष्णीषःसितोष्णीषोरक्तोष्णीषोदिगंबरः ॥ ९९ ॥ दिव्यांगोदिव्यरचनोदिव्यलोकविलोकितः ॥ सर्वोपमोनिरुपमोगोलोकां
कीकृतांगणः ॥ १०० ॥ कृतस्वोत्संगगोलोकःकुंडलीभूतआस्थितः ॥ माथुरोमाथुरादर्शीचलत्खंजनलोचनः ॥ १ ॥ दधिहर्तादु
ग्धहरोनवनीतसिताशनः ॥ तक्रभुक्तक्रहारीचदधिचौर्यकृतश्रमः ॥ २ ॥ प्रभावतीबद्धकरोदामीदामोदरोदमी ॥ सिकताभूमि
चारीचबालकेलिर्व्रजार्भकः ॥ ३ ॥ धूलिधूसरसर्वांगःकाकपक्षधरःसुधीः ॥ मुक्तकेशोवत्सवृंदःकालिंदीकूलवीक्षणः ॥ ४ ॥ जल
कोलाहलीकूलीपंकप्रांगणलेपकः ॥ श्रीवृंदावनसंचारीवंशीवटतटस्थितः ॥ ५ ॥ महावननिवासीचलोहार्गलवनाधिपः ॥ साधुः
प्रियतमःसाध्यःसाध्वीशोगतसाध्वसः ॥ ६ ॥ रंगनाथोविठ्ठलेशोमुक्तिनाथोघनाशकः ॥ सुकीर्तिःसुयशाःस्फीतोयशस्वीरंगरंज
नः ॥ ७ ॥ रागषट्कोरागपुत्रोरागिणीरमणोत्सुकः ॥ दीपकोमेघमल्लारःश्रीरागोमालकंसकः ॥ ८ ॥ हिन्दोलोभैरवाख्यश्चस्वरजा
तिस्मरोमृदुः ॥ तालोमानप्रमाणश्चस्वरगम्यःकलाक्षरः ॥ ९ ॥ शमीश्यामीशतानंदःशतयामःशतक्रतुः ॥ जागरःसुप्तआसुप्तःसु ॥१३॥
षुप्तःस्वप्नऊर्वरः ॥ १० ॥ ऊर्जःस्फूर्जोनिर्जरश्चविज्वरोज्वरवर्जितः ॥ ज्वरजिज्ज्वरकर्ताचज्वरयुक्त्रिज्वरोज्वरः ॥ ११ ॥ जांबवा
न्जंबुकाशंकीजंबूद्वीपोद्विपारिहा ॥ शाल्मलिःशाल्मलिद्वीपःप्लक्षःप्लक्षवनेश्वरः ॥ १२ ॥ कुशधारीकुशःकौशीकौशिकःकुशविग्रहः॥

त्मकोधिभूतश्चाधिदैवःस्वाश्रयाश्रयः ॥ ७१ ॥ महावायुर्महावीरश्चेष्टारूपतनुस्थितः ॥ प्रेरकोबोधकोबोधीत्रयोविंशतिकोगणः ॥
॥ ७२ ॥ अंशांशश्चनरावेशोवतारोभूपरिस्थितः ॥ महर्जनस्तपःसत्यंभूर्भुवःस्वरितित्रिधा ॥ ७३ ॥ नैमित्तिकःप्राकृतिकआत्यं
तिकमलोलयः ॥ सर्गोविसर्गःसर्गादिर्निरोधोरोधऊतिमान् ॥ ७४ ॥ मन्वंतरावतारश्चमनुर्मनुसुतोनघः ॥ स्वयंभूःशांभवःशंकुः
स्वायंभुवसहायकृत् ॥ ७५ ॥ सुरालयोदेवगिरिर्मेरुर्हेमार्चितोगिरिः ॥ गिरिशोगणनाथश्चगौरीशोगिरिगह्वरः ॥ ७६ ॥ विंध्य
स्त्रिकूटोमैनाकःसुवेलःपारिभद्रकः ॥ पतंगःशिशिरःकंकोजारुधिःशैलसत्तमः ॥ ७७ ॥ कालंजरोबृहत्सानुर्दरीभृन्नंदिकेश्वरः ॥ सं
तानस्तरुराजश्चमंदारःपारिजातकः ॥ ७८ ॥ जयंतकृज्जयंतांगोजयंतीदिग्जयाकुलः ॥ वृत्रहादेवलोकश्चशशीकुमुदबांधवः ॥
॥ ७९ ॥ नक्षत्रेशःसुधासिंधुर्मृगःपुष्यःपुनर्वसुः ॥ हस्तोभिजिच्चश्रवणोवैधृतिर्भास्करोदयः ॥ ८० ॥ ऐंद्रःसाध्यःशुभःशुक्लोव्य
तीपातोध्रुवःसितः ॥ शिशुमारोदेवमयोब्रह्मलोकोविलक्षणः ॥ ८१ ॥ रामोवैकुंठनाथश्चव्यापीवैकुंठनायकः ॥ श्वेतद्वीपोजितप
दोलोकालोकाचलाश्रितः ॥ ८२ ॥ भूमिवैकुंठदेवश्चकोटिब्रह्मांडकारकः ॥ असंख्यब्रह्मांडपतिर्गोलोकेशोगवांपतिः ॥ ८३ ॥
गोलोकधामधिषणोगोपिकाकंठभूषणः ॥ श्रीधरःश्रीधरोलीलाधरोगिरिधरोधरी ॥ ८४ ॥ कुंतधारीत्रिशूलीचबीभत्सीघर्घरस्व
नः ॥ शूलसूच्यर्पितगजोगजचर्मधरोगजी ॥ ८५ ॥ अंत्रमालीमुंडमालीव्यालीदंडकमंडलुः ॥ वेतालभृद्भूतसंघःकूश्मांडगणसं
वृतः ॥ ८६ ॥ प्रमथेशःपशुपतिर्मृडानीशोमृडोवृषः ॥ कृतांतकालसंघारिःकूटःकल्पांतभैरवः ॥ ८७ ॥ षडाननोवीरभद्रोदक्षयज्ञ
विघातकः ॥ खर्परासीविषाशीचशक्तिहस्तःशिवार्थदः ॥ ८८ ॥ पिनाकटंकारकरश्चलज्झंकारनूपुरः ॥ पंडितस्तर्कविद्वान्वैवेदपाठी
श्रुतीश्वरः ॥ ८९ ॥ वेदांतकृत्सांख्यशास्त्रीमिमांसीकणनामभाक् ॥ काणादिर्गौतमोवादीवादोनैयायिकोनयः ॥ ९० ॥ वैशेषिको
धर्मशास्त्रीसर्वशास्त्रार्थतत्त्ववित् ॥ वैयाकरणकृच्छंदोवैय्यासःप्राकृतिर्वचः ॥ ९१ ॥ पाराशरीसंहितावित्काव्यकृन्नाटकप्रदः ॥ पौरा

कुशस्थलीपतिःकाशीनाथोभैरवशासनः ॥ १३ ॥ दाशार्हःसात्वतोवृष्णिर्भोजोंधकनिवासकृत ॥ अंधकोदुंदुभिर्द्योतःप्रद्योतःसा
त्वतांपतिः ॥ १४ ॥ शूरसेनोनुविषयोभोजवृष्ण्यंधकेश्वरः ॥ आहुकःसर्वनीतिज्ञउग्रसेनोमहोग्रवाक् ॥ १५ ॥ उग्रसेनप्रियः
प्रार्थ्यप्रार्थ्योयदुसभापतिः ॥ सुधर्माधिपतिःसत्वंवृष्णिचक्रावृतोभिषक् ॥ १६ ॥ सभाशीलःसभादीपःसभाग्निश्चसभारविः ॥ स
भाचंद्रःसभामासःसदोदेवःसभापतिः ॥ १७ ॥ प्रजार्थदःप्रजाभर्ताप्रजापालनतत्परः॥ द्वारकादुर्गसंचारीद्वारकाग्रहविग्रहः॥१८॥
द्वारकादुःखसंहर्ताद्वारकाजनमंगलः ॥ जगन्माताजगत्राताजगद्भर्ताजगत्पिता ॥ १९ ॥ जगद्बंधुर्जगद्भ्राताजगन्मित्रोजगत्सखः ॥
ब्रह्मण्यदेवोब्रह्मण्योब्रह्मपादरजोदधत ॥ २० ॥ ब्रह्मपादरजःस्पर्शीब्रह्मपादनिषेवकः ॥ विप्रांघ्रिजलपूतांगोविप्रसेवापरायणः ॥
॥ २१ ॥ विप्रमुख्योविप्रहितोविप्रगीतमहाकथः ॥ विप्रपादजलार्द्रांगोविप्रपादोदकप्रियः ॥ २२ ॥ विप्रभक्तोविप्रगुरुर्विप्रोविप्र
पदानुगः ॥ अक्षौहिणीवृतोयोद्धाप्रतिमापंचसंयुतः ॥ २३ ॥ चतुरोंगिराःपद्मवर्तीसामंतोद्धृतपादुकः ॥ गजकोटिप्रयायीचरथको
टिजयध्वजः ॥ २४ ॥ महारथश्चातिरथोजैत्रंस्यंदनमास्थितः ॥ नारायणास्त्रीब्रह्मास्त्रीरणश्लाघीरणोद्भटः ॥ २५ ॥ मदोत्कटोयु
द्धवीरोदेवासुरभयंकरः ॥ करिकर्णमरुत्प्रेजत्कुंतलव्याप्तकुंडलः ॥ २६ ॥ अग्रगोवीरसंमर्दोमर्दलोरणदुर्मदः ॥ भटःप्रतिभटःप्रो
च्योबाणवर्षीषुतोयदः ॥ २७ ॥ खड्गखंडितसर्वांगःषोडशाब्दःषडक्षरः ॥ वीरघोषःक्लिष्टवपुर्वज्रांगोवज्रभेदनः ॥ २८ ॥ रुग्णव
ज्रोभग्नदंडःशत्रुनिर्भर्त्सनोद्यतः ॥ अट्टहासःपट्टधरःपट्टराज्ञीपतिःपटुः ॥ २९ ॥ कलःपटहवादित्रोहुंकारोगर्जितस्वनः ॥ साधुर्भ
क्तपराधीनःस्वतंत्रःसाधुभूषणः ॥ ३० ॥ अश्वतंत्रःसाधुमयःसाधुग्रस्तमनामनाक् ॥ साधुप्रियःसाधुधनःसाधुज्ञातिःसुधाघनः
॥ ३१ ॥ साधुचारीसाधुचित्तःसाधुवासीशुभास्पदः ॥ इतिनाम्नांसहस्रंतुबलभद्रस्यकीर्तितम् ॥ ३२ ॥ सर्वसिद्धिप्रदंनृणां
चतुर्वर्गफलप्रदं ॥ शतवारंपठेद्यस्तुसविद्यावान्भवेदिह ॥ ३३ ॥ इंदिरांचविभूतिंचाभिजनंरूपमेवच ॥ बलमोजश्चपठना

त्सर्वंप्राप्नोतिमानवः ॥ ३४ ॥ गंगाकूलेथकालिंदीकूलेदेवालयेतथा ॥ सहस्रावर्तपाठेनबलात्सिद्धिःप्रजायते ॥ ३५ ॥ पुत्रार्थी
लभतेपुत्रंधनार्थीलभतेधनं ॥ बंधात्प्रमुच्यतेबद्धोरोगीरोगान्निवर्तते ॥ ३६ ॥ अयुतावर्तपाठेचपुरश्चर्याविधानतः ॥ होमतर्पण
गोदानविप्रार्चनकृतोद्यमात् ॥ ३७ ॥ पटलंपद्धतिंस्तोत्रंकवचंतुविधायच ॥ महामंडलभर्तास्यान्मंडितोमंडलेश्वरैः ॥ ३८ ॥ म
त्तेभकर्णप्रहितामदगंधेनविह्वला ॥ अलंकरोतितद्द्वारंभ्रमद्भृंगावलीभृशं ॥ ३९ ॥ निष्कारणःपठेद्यस्तुप्रीत्यर्थंरेवतीपतेः ॥
नाम्नांसहस्रंराजेंद्रसजीवन्मुक्तउच्यते ॥ ४० ॥ सदावसेत्तस्यगृहेबलभद्रोच्युताग्रजः ॥ महापातक्यपिजनःपठेन्नामसहस्रकं ॥
॥ ४१ ॥ छित्वामेरुसमंपापंभुक्त्वासर्वसुखंत्विह ॥ परात्परंमहाराजगोलोकंधामयातिहि ॥ ४२ ॥ नारदउवाच ॥ गद्येइति
श्रुत्वाच्युताग्रजस्यबलदेवस्यपंचांगंधृतिमान्धार्तराष्ट्रःसपर्ययासहितयापरयाभक्त्याप्राड्विपाकंपूजयामासतमनुज्ञाप्याशिषंदत्त्वा
प्राड्विपाकोमुनींद्रोगजाह्वयात्स्वाश्रमंजगाम ॥ ४३ ॥ भगवतोनंतस्यबलभद्रस्यपरब्रह्मणःकथांयःशृणुतेश्रावयतेतयानंदमयो
भवति ॥ ४४ ॥ इदंमयातेकथितंनृपेंद्रसर्वार्थदंश्रीबलभद्रखंडं ॥ शृणोतियोधामहरेःसयातिविशोकमानंदमखंडरूपं ॥ १४५ ॥
इतिश्रीमद्गर्गसंहितायांश्रीबलभद्रखंडेप्राड्विपाकदुर्योधनसंवादेबलभद्रसहस्रनामवर्णनंनामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥

॥ इति बलभद्रखंडं समाप्तम् ॥ ८ ॥ ॥



ग. सं. श्रीगणेशायनमः ॥ बहुलाश्वउवाच ॥ हरेःश्रीकृष्णचंद्रस्य भक्तिमार्गस्तुयःपरः ॥ तंवदाशुमुनेमह्यंयेनभक्तोभवाम्यहं ॥ १ ॥ वि. ९
नारदउवाच ॥ भक्तिमार्गंवदिष्यामिवेदव्यासमुखाच्छ्रुतं ॥ येनप्रसन्नोभवतिभगवान्भक्तवत्सलः ॥ २ ॥ शंखंविजित्य अ. १
॥ १ ॥ कृष्णेनभुजदंडबलोद्धृतं ॥ द्वारावत्यांसभादिव्यासुधर्मानाममैथिल ॥ ३ ॥ यत्रमंडपदेशस्यवैडूर्यस्तंभपंक्तयः ॥ राजंतेकोटिशो
राजन्विश्वकर्मविनिर्मिताः ॥ ४ ॥ पद्मरागखचिद्भूमौश्रेण्योवैविद्रुमाचिताः ॥ यत्रचित्रवितानानिभ्राजंतेमौक्तिकालिभिः ॥ ५ ॥
सिंहासनानिकुडयानिकालमेघतडिद्द्युभिः ॥ जांबूनदसुवर्णानांस्फुरत्कुंडलकोटिभिः ॥ ६ ॥ बालार्करत्नकेयूरकांचीकंकणनूपुरैः॥
शतचंद्रप्रतीकाशाःस्फुरत्कुंडलमंडिताः ॥ ७ ॥ गायंतियत्रगंधर्व्योविद्याधर्योमुदान्विताः ॥ नृत्यंत्यःकलवादित्रैःस्पर्द्धावत्यःपर
स्परं ॥ ८ ॥ यस्याश्चतुर्षुकोणेषुदेववृक्षैर्मनोरमैः ॥ नंदनंसर्वतोभद्रंध्रौव्यंचैत्ररथंवनं ॥ ९ ॥ लक्षाणियत्रराजेंद्रसरांसिविमला
निच ॥ सहस्त्रदलपद्मानिभ्रमरैःसंकुलानिच ॥ १० ॥ दशयोजनविस्तीर्णापंचयोजनमूर्द्धगा ॥ एतादृशीसुधर्मास्तेपताकध्वज
मंडिता ॥ ११ ॥ यत्रप्रविष्टःपुरुषआत्मानंमन्यतेपरं ॥ यत्सिंहासनमासाद्यशक्रोहमितिमन्यते ॥ १२ ॥ यद्यत्त्रैलोक्यचातुर्यंत
स्यदेहेप्रवर्तते ॥ यावत्तिष्ठेत्तत्रतावदूर्मिषट्कंनचैवहि ॥ १३ ॥ यावंतश्चजनास्तत्रप्रविशंतिनरोत्तम ॥ स्वप्रभावेणसहसातावती
साप्रकाशते ॥ १४ ॥ षट्पंचाशत्कोटिसंख्यायादवायत्रसानुगाः ॥ तच्चत्वरस्यैकदेशेदृश्यंतेतेचमैथिल ॥ १५ ॥ परिपूर्णतमः
साक्षाच्छ्रीकृष्णोभगवान्स्वयं॥ यत्रास्तेतस्यराजेंद्रवर्णनंकःकरोतिहि ॥ १६ ॥ अथतस्यांसुधर्मायांयदुकोटिसमावृतः ॥ उग्र
सेनोगीयमानःसूतमागधबंदिभिः ॥ १७ ॥ आकाशादागतःसाक्षाद्वेदव्यासोमहामुनिः ॥ पाराशर्योघनश्यामस्तडित्पिंगजटा ॥ १ ॥
धरः ॥ १८ ॥ तंदृष्ट्वासहसोत्थाययदुराजःकृतांजलिः ॥ नत्वासनंसोपचारंदत्वातत्संमुखोभवत् ॥ १९ ॥ उग्रसेनउवाच ॥
अद्यमेसफलंजन्मसफलंगेहमद्यमे ॥ अद्यमेसफलोधर्मोब्रह्मंस्त्वय्यागतेसति ॥ २० ॥ सदानंदेषुकुशलंकृष्णेनेष्टंभवत्सुहि ॥

वदमेकुशलंदेवयेनस्वस्थोभवाम्यहम् ॥ २१ ॥ यत्रयत्रव्रजंतस्तेत्वादृशाःसाधवःप्रभो ॥ तत्रतत्रभवेत्सिद्धिर्लौकिकीपारलौकिकी
॥ २२ ॥ यत्रक्षणंस्थिताःसंतस्तत्रसाक्षात्स्वयंहरिः ॥ किमुलोकगुणाब्रह्मन्पाराशर्यमहामुने ॥ २३ ॥ मयातुपुण्यंयज्ञोवा
किंकृतंपूर्वजन्मनि ॥ येनवैद्वारकाराज्यंप्राप्तोहंमुनिपुंगव ॥२४॥ भवादृशाविप्रमुख्यागृहमायांतिनित्यशः ॥ तस्मात्परंहिसुकृतंजा
नेस्वस्यनसंशयः ॥२५॥ व्यासउवाच ॥ धन्योसिराजशार्दूलधन्यातेविमलामतिः ॥ परंकृतंत्वयाराजन्सकृतंपूर्वजन्मनि ॥२६॥
पुरात्वंमरुतोराजन्कृत्वायज्ञंजगज्जितं ॥ निष्कारणोभूर्मनसाप्रसन्नोभूद्धरिस्तदा ॥ २७ ॥ अनिमित्तेनभावेनप्राप्तंचेदंपरंतव ॥
परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्हरिः ॥ २८ ॥ असंख्यब्रह्मांडपतिर्गोलोकेशःपरात्परः ॥ सोयंभक्त्यावशीभूतःस्ववशस्तव
मंदिरे ॥ २९ ॥ अहोभोजपतेमुक्तिंददातिभजतांहरिः ॥ नकर्हिचिद्भक्तियोगंदुर्लभंविद्धितंनृप ॥ ३० ॥ इतिश्रीमद्गर्गसंहिता
यांविज्ञानखंडेनारदबहुलाश्वसंवादेव्यासागमनंनामप्रथमोऽध्यायः ॥ १ ॥ उग्रसेनउवाच ॥ धन्योस्म्यनुगृहीतोस्मितववर्ण
ननिर्वृतः ॥ हृदुद्भूतंचसंदेहंदूरीकर्तुंभवान्क्षमः ॥ १ ॥ कर्मणांसनिमित्तानांकागतिःकिंचलक्षणं ॥ कतिभेदाहितेषांवैवदब्रह्मन्
यथातथा ॥ २ ॥ व्यासउवाच ॥ गुणैःसर्वाणिकर्माणिसनिमित्तानिसंतिहि ॥ तान्येवचानिमित्तानिराजन्त्यक्तफलानिहि ॥
॥ ३ ॥ सनिमित्तंचयत्कर्मबंधनंविद्धियादव ॥ अनिमित्तंचयत्कर्ममोक्षदंपरमंशुभम् ॥ ४ ॥ सत्वंरजस्तमइतिगुणाःप्रकृतिसं
भवाः ॥ तैर्व्याप्तंहिजगत्सर्वंसर्वार्थमिवविष्णुना ॥ ५ ॥ सत्वेप्रलीनाःस्वर्यांतिनरलोकंरजोलयाः ॥ तमोलयास्तुनरकंयांति
कृष्णंहिनिर्गुणाः ॥ ६ ॥ पंचाग्नितप्ताःप्रतपन्येराजन्व्रजवासिनः ॥ लोकंसप्तऋषीणांतुयेयांतिगतकल्मषाः ॥ ७ ॥ संन्या
साश्रमकर्तारस्त्रिदंडधृतपाणयः ॥ जितेंद्रियमनोधर्माःसत्यलोकंव्रजंतिहि ॥ ८ ॥ अष्टांगयोगयोगींद्रानिर्मलाऊर्ध्वरेतसः ॥
जनलोकंमहर्लोकंयांतितेनात्रसंशयः ॥ ९ ॥ यज्ञकर्ताशक्रलोकेवसतेशाश्वतीःसमाः ॥ दानीचांद्रमसंलोकंव्रतीसौरंव्रजत्यलं ॥

ग. सं. ॥ १० ॥ तीर्थयायीचाग्निलोकंसत्यसंधश्चवारुणं ॥ वैष्णवाश्चापिवैकुंठंशैवाःशैवंव्रजंतिहि ॥ ११ ॥ पितॄन्यजंतियेनित्यंसुखैश्च वि. ९
संप्रजेप्सवः ॥ दक्षिणेनपथाऽर्यम्णापितृलोकंव्रजंतिते ॥ १२ ॥ स्वर्लोकंवैतथास्मार्ताःपंचपूजनसंयुताः ॥ प्रजापतियजोयांतिद अ. २
॥ २ ॥ क्षादींश्चप्रजापतीन् ॥ १३ ॥ भूतानियांतिभूतेज्यायक्षान्यक्षयजस्तथा ॥ येयस्यभक्तास्तल्लोकान्यांतिराजन्नसंशयः ॥ १४ ॥
तथापापरताराजन्दुःसंगवशवर्तिनः ॥ यमलोकंचतेयांतिनिरयैर्दारुणैर्वृतम् ॥ १५ ॥ पुनरावर्तिनोलोकाःसर्वेचाब्रह्मलोकतः ॥
पुनरावर्तिनोलोकान्विद्धिराजन्महामते ॥ १६ ॥ कर्मणांसनिमित्तानांमार्गएषगतागतः ॥ तावत्प्रमोदतेस्वर्गेयावत्पुण्यंसमाप्य
ते ॥ १७ ॥ क्षीणपुण्यःपतत्यर्वागनिच्छन्कालचालितः ॥ यादवेंद्रमहाबाहोतस्मात्कर्मफलंत्यजेत् ॥ १८ ॥ भक्तोनिष्कारणो
भूत्वाज्ञानवैराग्यसंयुतः ॥ प्रेमलक्षणयावाचाहरिभक्तजनप्रियः ॥ १९ ॥ भजेच्छ्रीकृष्णपादाब्जमभयंहंससेवितं ॥ योमृत्युःसर्व
लोकानांबलात्संहारकारकः ॥ २० ॥ सयत्रभगवद्धाम्निगतःसन्मृत्युमाप्नुयात् ॥ २१ ॥ उग्रसेनउवाच ॥ सर्वेलोकाहिभगवन्पु
नरावर्तिनःस्मृताः ॥ तेभ्योजातंचवैराग्यंमनसोमेनसंशयः ॥ २२ ॥ श्रीकृष्णधामपरमंयतोनावर्ततेगतः ॥ तल्लोकंवदमेब्रह्मन्क
चास्तेसर्वतःपरं ॥ २३ ॥ श्रीव्यासउवाच ॥ ब्रह्मांडेभ्योबहिर्धामश्रीकृष्णस्यमहात्मनः ॥यद्गतानिवर्तंतेतद्धोलोकंविदुःपरं॥२४॥
ब्रह्मांडोयंजविसंघःपंचाशत्कोटियोजनैः ॥ विस्तृतःपरतोद्वाभ्यांशतकोटिविलंघितः ॥ २५ ॥ यदंतरगतोराजन्नलक्ष्यतेपरमाणु
वत् ॥ तदंतरगताश्चान्येकोटिशोह्यंडराशयः ॥ २६ ॥ नतद्भासयतेसूर्योनशशांकोनपावकः ॥ कामक्रोधश्चलोभश्चनमोहोयत्रया
तिच ॥ २७ ॥ नयत्रशोकोनजरानमृत्युर्नार्तिरेवच ॥ नप्रधानंनकालश्चविशंतेचगुणाःकुतः ॥ २८ ॥ शब्दब्रह्माप्यनिर्वाच्यंत ॥ २ ॥
द्वर्णयितुमक्षमः ॥ श्रीकृष्णतेजःसंभूतास्तत्रसंतिचपार्षदाः ॥ २९ ॥ अकिंचनाश्चयेदांताःशांतावैसमचेतसः ॥ श्रीकृष्णचंद्रपा
दाब्जमकरंदरसालयाः ॥ ३० ॥ प्रेमलक्षणयाभक्त्यासदानिष्कारणाःपराः ॥ लोकानुल्लंघ्यतद्धामयांतिराजन्नसंशयः ॥ ३१ ॥

इतिश्रीमद्गर्गसंहितायांश्रीविज्ञानखंडेश्रीव्यासोग्रसेनसंवादेलोकगतिनिरूपणंनामद्वितीयोऽध्यायः ॥ २ ॥ ॥ उग्रसेनउवा
च ॥ श्रुतंतवमुखाद्ब्रह्मन्नृगुणकर्मगतिर्मया ॥ पुनरावर्तिनोलोकास्तथासंतिविनिश्चिताः ॥ १ ॥ निष्कारणाद्धरेःसाक्षात्सेवनाद्धा
ममुत्तमम् ॥ लभतेदुर्लभंदिव्यंभक्तानांतच्छ्रुतंमया ॥ २ ॥ भक्तियोगःकतिविधोवदमेवदतांवर ॥ येनप्रसन्नोभवतिभगवान्भक्त
वत्सलः ॥ ३ ॥ श्रीव्यासउवाच ॥ द्वारावतीशधन्योसिश्रीकृष्णेष्टोहरिप्रियः ॥ पृच्छसेभक्तियोगंत्वंधन्यातेविमलामतिः ॥ ४ ॥
यंश्रुत्वानिर्मलोभूयाद्विश्वघात्यपिपातकी ॥ तंभक्तियोगंविशदंतुभ्यंवक्ष्यामियादव ॥ ५ ॥ भक्तियोगोद्विधाराजन्सगुणश्चैवनि
र्गुणः ॥ सगुणःस्याद्बहुविधोनिर्गुणश्चैकलक्षणः ॥ ६ ॥ सगुणःस्याद्बहुविधोगुणमार्गेणदेहिनां ॥ तैर्गुणैस्त्रिविधाभक्ताभवन्तिशृणु
तान्पृथक् ॥ ७ ॥ हिंसांदंभंचमात्सर्य्यंचाभिसंधायभिन्नदृक् ॥ कुर्याद्भावंहरौक्रोधीतामसःपरिकीर्तितः ॥ ८ ॥ यशऐश्वर्यविष
यानभिसंधाययत्नतः ॥ अर्चयेद्योहरिंराजन्राजसःपरिकीर्तितः ॥ ९ ॥ उद्दिश्यकर्मनिर्हारमपृथग्भावएवहि ॥ मोक्षार्थंभजते
विष्णुंसभक्तःसात्त्विकःस्मृतः ॥ १० ॥ जिज्ञासुरार्तोज्ञानीचतथार्थार्थीमहामते ॥ चतुर्विधाजनाविष्णुंभजंतेकृतमंगलाः ॥ ११ ॥
एवंबहुवि[illegible]ापिभक्तियोगेनमाधवं ॥ भजंतिसनिमित्तास्तेजनाःसुकृतिनःपरे ॥ १२ ॥ लक्षणंभक्तियोगस्यनिर्गुणस्यतथाशृणु ॥
तद्गुणश्रुति[illegible]त्रेणश्रीकृष्णेपुरुषोत्तमे ॥ १३ ॥ परिपूर्णतमेसाक्षात्सर्वकारणकारणे ॥ मनोगतिरविच्छिन्नाखंडिताहैतुकीचया ॥
॥ १४ ॥ यथाब्धावंभसागंगासाभक्तिर्निर्गुणास्मृता ॥ निर्गुणानांचभक्तानांलक्षणंशृणुमानद ॥ १५ ॥ सार्वभौमंपारमेष्ठ्यंचंशक्र
धिष्ण्यंतथैवच ॥ रसाधिपत्यंयोगर्द्धिंनवांच्छंतिहरेर्जनाः ॥१६॥ हरिणादीयमानंवासालोक्यंयादवेश्वर ॥ नगृह्णंतिकदाचित्तेस
त्संगानंदनिर्वृताः ॥ १७ ॥ सामीप्यंतेनवांच्छंतिभगवद्विरहातुराः ॥ सन्निकृष्टेनतत्प्रेमयथादूरतरेभवेत् ॥ १८ ॥ सारूप्यंदीय
मानंवासमानत्वाभिमानिनः ॥ नैरपेक्ष्यान्नवांच्छंतिभक्तास्तत्सेवनोत्सुकाः ॥ १९ ॥ एकत्वंचापिकैवल्यंनवांच्छंतिकदाचन ॥ ए

 वंचेत्तर्हिदासत्वंकस्वामित्वंपरस्यच ॥ २० ॥ निरपेक्षाश्चयेशांतानिर्वैराःसमदर्शिनः ॥ आकैवल्याल्लोकपदग्रहणंकरणंविदुः ॥ 
॥ २१ ॥ नैरपेक्ष्यंमहानंदंनिरपेक्षाजनाहरेः ॥ जानंतिहियथानासापुष्पामोदंनचक्षुषी ॥ २२ ॥ सकामाश्चतदानंदंजानंतिहिकि
 थंचन ॥ रसकर्तातथाहस्तोरसस्वादंनवेत्तिहि ॥ २३ ॥ तस्माद्राजन्भक्तियोगंविद्धिचात्यंतिकंपदं ॥ भक्तानांनिरपेक्षाणांपद्धतिं 
कथयामिते ॥ २४ ॥ स्मरणंकीर्तनंविष्णोःश्रवणंपादसेवनं ॥ अर्चनंवंदनंदास्यंसख्यमात्मनिवेदनं ॥ २५ ॥ कुर्वंतिसततंराजन्
भक्तिंयेप्रेमलक्षणां ॥ तेभक्तादुर्लभाभूमौभगवद्भावभावनाः ॥ २६ ॥ कुर्वंतोमहतोपेक्षांदयांहीनेषुसर्वतः ॥ समानेषुतथामैत्रींसर्व
भूतदयापराः ॥ २७ ॥ कृष्णपादाब्जमधुपाःकृष्णदर्शनलालसाः ॥ कृष्णंस्मरंतिप्राणेशंयथाप्रोषितभर्तृकाः ॥ २८ ॥ श्रीकृष्ण
स्मरणाद्येषांरोमहर्षःप्रजायते ॥ आनंदाश्रुकलाश्चैववैवर्ण्यंतुक्वचिद्भवेत् ॥ २९ ॥ श्रीकृष्णगोविंदहरेब्रुवंतःश्लक्ष्णयागिरा ॥ अ
हर्निशंहरौलग्नास्तेहिभागवतोत्तमाः ॥ ३० ॥ इतिश्रीमद्गर्गसंहितायांश्रीविज्ञानखंडेश्रीवेदव्यासोग्रसेनसंवादेनिर्गुणभक्तियोग
वर्णनंनामतृतीयोऽध्यायः ॥ ३ ॥ ॥ श्रीव्यासउवाच ॥ खेवायौसलिलेवह्नौमह्यांज्योतिर्गणेषुच ॥ श्रीकृष्णदेवंपश्यंतोहर्षि
ताश्चपुनःपुनः ॥ १ ॥ श्रीकृष्णोराधिकानाथःकोटिकंदर्पमोहनः ॥ तन्नेत्रगोचरोयातिब्रुवंश्छ्रीनंदनंदनः ॥ २ ॥ सदानंदंचतेदृष्ट्वा
प्रहसंतिप्रहर्षिताः ॥ क्वचिद्वदंतिधावंतिनंदंतिचक्वचित्तथा ॥ ३ ॥ क्वचिद्गायंतिनृत्यंतिक्वचित्तूष्णींभवंतिच ॥ कृष्णचंद्रस्वरूपा
रतेकृतार्थावैष्णवोत्तमाः ॥ ४ ॥ तेषांदर्शनमात्रेणनरोयातिकृतार्थतां ॥ नकालोनयमस्तेषांदंडंदातुंनचक्षमः ॥ ५ ॥ गदाकौमोद
कीवामेदक्षिणेचसुदर्शनं ॥ अग्रेशार्ङ्गधनुःपश्चात्पांचजन्योघनस्वनः ॥ ६ ॥ नंदकश्चमहाखड्गःशतचंद्रेषवःशिताः ॥ एतान्यायुध
मुख्यानितांश्चरक्षंत्यहर्निशं ॥ ७ ॥ तथोपरिमहापद्मंछायांकर्तुंपुनःपुनः ॥ गरुडाःपक्षवातेनश्रमहर्तासतामपि ॥ ८ ॥ यत्रयत्र 
गताःसंतरतत्रतत्रवयंहारिः ॥ तीर्थीकुर्वन्भूमिभागंश्रीमत्पादाब्जरेणुभिः ॥ ९ ॥ क्षणंयत्रस्थिताःसंतस्तत्रतीर्थानिसंतिहि ॥

तत्रकोपिमृतःपापीयातिविष्णोःपरंपदम् ॥ १० ॥ दूरात्संप्रेक्ष्यकृष्णेष्टानाधयोव्याधयस्तथा ॥ भूतप्रेतपिशाचाश्चपलायंतेदिशो
दश ॥ ११ ॥ नद्योनदाःपर्वताश्चसमुद्राश्चतथापरे ॥ मार्गंददुश्चसाधुभ्योनपेक्षेभ्यःसमंततः ॥ १२ ॥ साधूनांज्ञाननिष्ठानांविर
क्तानांमहात्मनां ॥ अजातशत्रूणांतेषांदुर्लभंपुण्यवर्जितैः ॥ १३ ॥ यस्मिन्कुलेकृष्णभक्तोजायतेब्रह्मलक्षणं ॥ तत्कुलंविमलंवि
द्धिमलीमसमपिस्वतः ॥ १४ ॥ राजन्श्रीकृष्णभक्तस्तुपितॄन्दशकुलोद्भवान् ॥ प्रियापक्षेपिदशचमातृपक्षेतथादश ॥ १५ ॥ पुरु
षानुद्धरेद्राजन्निरयात्पापबंधनात ॥ साधुसंबंधिनश्चान्येभृत्यादासाःसुहृज्जनाः ॥ १६ ॥ शत्रवोभारवाहाश्चतद्गृहेपक्षिणस्तथा ॥
पिपीलिकाश्चमशकास्तथाकीटपतंगकाः ॥ १७ ॥ अब्रह्मण्येकृष्णसारेसौवीरेकीटकेतथा ॥ म्लेच्छदेशेपिदेवेशभक्तोलोकान्पुना
तिहि ॥ १८ ॥ सांख्ययोगंविनाराजंस्तीर्थधर्ममखैर्विना ॥ साधुसंसर्गिनस्तेपिप्रयांतिहरिमंदिरे ॥ १९ ॥ इत्थंश्रीकृष्णभक्तानां
माहात्म्यंकथितंमया ॥ चतुःपदार्थदंनॄणांकिंभूयःश्रोतुमिच्छसि ॥ २० ॥ उग्रसेनउवाच ॥ परिपूर्णतमेसाक्षाच्छ्रीकृष्णेपरमात्म
नि ॥ दंतवक्रस्यदुष्टस्यज्योतिर्लीनंबभूवह ॥ २१ ॥ अहोमहदिदंचित्रंसायुज्यंमहतामपि ॥ योग्यस्याद्विप्रमुख्येंद्रकथंचान्येनश
त्रुणा ॥ २२ ॥ श्रीव्यासउवाच ॥ ममाहमितिवैषम्यंभूतानांत्रिगुणात्मनां ॥ क्रोधाद्यैर्वर्ततेराजन्नहरौपरमात्मनि ॥ २३ ॥ हरौ
केनापिभावेनमनोलग्नंकरोतियः ॥ यातितद्रूपतायांतिभृंगिणःकीटकोयथा ॥ २४ ॥ स्नेहंकामंभयंक्रोधमैक्यंसौहृदमेवच ॥ कृत्वा
तन्मयतांयांतिसांख्ययोगंविनाजनाः ॥ २५ ॥ स्नेहान्नंदयशोदाद्यावसुदेवादयोऽपरे ॥ कामाद्गोप्योहरिंप्राप्तानतुब्रह्मतयान्नृप ॥
॥ २६ ॥ तद्रूपगुणमाधुर्यभावसँल्लग्नमानसाः ॥ भयात्कंसस्तवसुतस्तत्सायुज्यंजगामह ॥ २७ ॥ क्रोधादयंदंतवक्रःशिशुपाला
दयोऽपरे ॥ ऐक्याच्चयादवायूयंसौहृदाच्चवयंतथा ॥ २८ ॥ तस्मात्केनाप्युपायेनमनःकृष्णेनिवेशयेत ॥ अहर्निशंहिस्मरणंभवे
च्छत्रोर्नकर्हिचित ॥ २९ ॥ शत्रुभावंहरौतस्मात्कुर्वंतिदनुजादयः ॥ इतिश्रीमद्गर्गसंहितायांविज्ञानखंडेश्रीव्यासोग्रसेनसंवादेभ

क्माहात्म्यंनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ श्रीवेदव्यासउवाच ॥ वत्साघधेनुकबकीबककेशिकालारिष्टप्रलंबकपिबल्वलशंख
शालाः ॥ वैरेणयंकिमुतभक्तियुतानरेंद्रप्रापुःपरंप्रकृतिपूरुषयोःपुमांसं ॥ १ ॥ पूर्वासुरावतिबलौमधुकैटभाख्यौस्वर्णाक्षहेमकशिपू
चतथापरौच ॥ वैरंविधायनृपरावणकुंभकर्णौविष्णोःकिलापतुरलंपरमंपदंहि ॥ २ ॥ केकेनविष्णुपदमागतवंतआदौप्रह्लादबाण
बलियक्षविभीषणाद्याः ॥ सत्संगसंगनिरताबहुमानपात्रश्रीमत्पदाब्जमकरंदरजोविलुब्धाः ॥ ३ ॥ देवर्षिगीष्पतिवसिष्ठपराश
राद्याःसांख्यायनासितशुकाःसनकादयश्च ॥ निष्कारणाभुविचरंत्यरविंदनेत्रपादारविंदमकरंदमिलिंदमुख्याः ॥ ४ ॥ यत्युत्कलां
गभरतार्जुनमैथिलाश्वगाधिप्रियव्रतयदुप्रमुखांबरीषाः ॥ निष्कारणाःपरमहंसवराश्चरंतिश्रीकृष्णचंद्रचरितामृतपानमत्ताः ॥ ५ ॥
मंदोदरीचशबरीचपतंगशिष्यास्तारातथात्रिवनितानिपुणात्वहल्या ॥ कुंतीतथाद्रुपदराजसुतासुभक्ताएताःपरंपरमहंससमाःप्रसि
द्धाः ॥ ६ ॥ सुग्रीववालिसुतवातसुतर्क्षराजनागारिगृध्रवरकाकभुशुंडिमुख्याः ॥ कुब्जादिवायकसुदामगुहादयोन्येतत्संगमेत्यह
रिभक्तवराबभूवुः ॥ ७ ॥ कृष्णंनरोधयतिधर्मतपोनयोगःसांख्यंनयज्ञउततीर्थयमव्रतानि ॥ छंदांसिपूर्तनियमावथदक्षिणाचनेष्टं
नदानमथभक्तिमृतेनकश्चित् ॥ ८ ॥ यज्ञव्रताध्ययनतीर्थतपोनियोगैरिष्टस्वधर्मनियमादिकसांख्ययोगैः ॥ यत्प्राप्यतेतदखिलं
भवतीहभक्त्याभक्तेःपदंहिकर्हिचिन्नभवेत्किलैभिः ॥ ९ ॥ उद्धारिणीयमपुरस्यचविश्वरूपादुत्तारिणीभवमहार्णववारिवेगात् ॥ सं
हारिणीविषयसंचितकर्मणांचसत्कारिणीहरिपदस्यपरात्परस्य ॥ १० ॥ श्रीकृष्णदर्शनरसोत्सुकभावराजदुद्यद्वसंतपरमोत्सवपं
चमीयं ॥ दिव्यालतातिफलपल्लवभारनम्रासंराजतेहिसततंकुसुमाकरस्य ॥ ११ ॥ संमोहकालघनमध्यतडित्स्फुरंतीशास्त्रार्थ
दर्शवचसांपददीपिकेयं ॥ दीपावलिर्विजयतेजयकार्तिकस्यजेतुंगुणान्विजयिनोदशमीजयस्य ॥ १२ ॥ सांख्यंचयोगइतिपार्श्वे
गतेहिदंडेकीलानिचात्रशतशोगुणभावभेदाः ॥ अस्याःक्रमानवकथाश्रवणादयश्चश्रेणीयमस्तिसरलाभगवत्पदस्य ॥ १३ ॥

इतिश्रीमद्गर्गसंहितायांश्रीविज्ञानखंडेव्यासोग्रसेनसंवादेभक्त्युत्कर्षवर्णनंनामपंचमोऽध्यायः ॥ ५ ॥ ॥ उग्रसेनउवाच ॥
कर्मगृहोगृहस्थोयंश्रीकृष्णस्यमहात्मनः ॥ सेवांवैकेनविधिनाकुर्यात्तद्ब्रूहिमेमुने ॥ १ ॥ भक्त्यंकुरोयस्यनास्तिवास्तितस्यनवर्द्ध
ते ॥ तस्यकेनप्रकारेणप्रसन्नःस्याद्धरिःस्वयम् ॥ २ ॥ श्रीव्यासउवाच ॥ यदिभक्त्यंकुरोनस्यात्सत्संगेनचजायते ॥ बलाद्विवर्द्ध
तेतस्मात्सतांसंगंसमाचरेत ॥ ३ ॥ कृष्णसेवाविधिंतुभ्यंवक्ष्यामिसुलभंपरं ॥ ययागृहस्थोयंशीघ्रंश्रीकृष्णंप्राप्नुयान्नृप ॥ ४ ॥
आचार्य्यंकुलसंभूतंश्रीकृष्णध्यानतत्परं ॥ एतादृशंगुरुंकृत्वासिद्धोभवतिमानवः ॥ ५ ॥ गुरोःसेवाविधिंशिक्षेच्छ्रीकृष्णस्यमहा
त्मनः ॥ ६ ॥ विष्णुदीक्षाविहीनस्यसर्वंभवतिनिष्फलं ॥ निर्गुरोर्दर्शनंकृत्वाहतपुण्योभवेन्नरः ॥ ७ ॥ उत्तराभिमुखंशश्वत्कारये
द्धरिमंदिरं ॥ तत्रसिंहासनंप्रोच्चंसपीठंकुंभमंडितं ॥ ८ ॥ सच्चिदानंदनामस्यात्सोपानत्रयभूषितं ॥ महार्हवस्त्रैराच्छन्नंतत्रतुल्यास
नंमृदु ॥ ९ ॥ पार्श्वोपवर्हणयुतंस्फुरद्धेमांबरावृतं ॥ नानाचित्रयुतैःकुड्यैरंतःपटसमन्वितैः ॥ १० ॥ सर्वतोमंडलैस्तद्वत्तोरणैःसम
लंकृतं ॥ गवाक्षवारियंत्राढ्यंचतुःशालसुजालकैः ॥ ११ ॥ राजतप्रांगणोदेशःसभामंडपमंडितः ॥ तत्रप्रांगणमध्येतुतुलसीमंदि
रंशुभं ॥ १२ ॥ मंदिरस्यबहिर्द्वारिकारयेद्दीपिकाद्वयम् ॥ तथावैकृत्रिमंराजन्सिंहद्वयमधिष्ठितम् ॥ १३ ॥ सुवर्णशिखरस्याधश्चक्रं
चशिखरोपरि ॥ द्वारेपिहरिनामानिप्रालेख्यानिशुभानिच ॥ १४ ॥ शंखपद्मगदाशार्ङ्गमालेख्यंभित्तिपार्श्वयोः ॥ इषुधीचतथाबा
णःसव्येदक्षिणएवच ॥ १५ ॥ तथामंदिरपृष्ठेवैशतचंद्रंचनंदकम् ॥ हलंचमुसलंचैवलेखनीयंप्रयत्नतः ॥ १६ ॥ सिंहासनस्यपृ
ष्ठेतुगोप्योगावस्तथैवच ॥ गोपालास्तत्रसोपानेकपाटेविजयोजयः ॥ १७ ॥ देहल्यांकल्पवृक्षश्चस्तंभेषुचलतांशुभां ॥ यत्रतत्र
चकुड्येषुश्रीगंगापापहारिणी ॥ १८ ॥ वृंदावनंगोवर्द्धनंयमुनापुलिनानिच ॥ तथावैचीरहरणमालेख्यंरासमंडलं ॥ १९ ॥
चित्रकूटःपंचवटीलेखनीयंप्रयत्नतः ॥ रामरावणयोर्युद्धंजानकीहरणंविना ॥ २० ॥ दशावतारचित्राणिनरनारायणाश्रमः ॥

सप्तपुर्य्यस्त्रयोग्रामानवारण्यंनवोपराः ॥ २१ ॥ एवंलिखित्वाचित्राणिमंदिरंकारयेद्बुधः ॥ वंशीभावोद्युतकरंवक्रीभूतांघ्रिदक्षि
णम् ॥ २२ ॥ किशोराकृतिकृष्णस्यरूपंसेव्यतमंस्मृतं ॥ तत्प्रतिष्ठांविधायाशुगुरुहस्तेनमंदिरे ॥ २३ ॥ भक्तःपरमयाभक्त्यास्था
पयेत्तत्परोभवेत् ॥ तत्प्रसादेचरसनांघ्राणंचतुलसीदले ॥ न्यसेत्कर्णौतत्कथायामेवंसेवापरोभवेत् ॥ २४ ॥ अहर्निशंकृष्णसेवांयः
करोतिचभाववित् ॥ तंप्रेमलक्षणंभक्तंविदुर्भागवतोत्तमाः ॥ २५ ॥ अश्वमेधसहस्राणिराजसूयशतानिच ॥ राजन्श्रीकृष्णसेवा
याःकलांनार्हंतिषोडशीं ॥ २६ ॥ श्रीकृष्णदेशिकस्यापियःकुर्याद्दर्शनंनरः ॥ कोटिजन्मकृतैःपापैर्मुच्यतेनात्रसंशयः ॥ २७ ॥
देहांतेतंसमानेतुंश्यामसुंदरविग्रहाः ॥ रथंनीत्वाप्रधावंतिगोलोकात्कृष्णपार्षदाः ॥ २८ ॥ इतिश्रीमद्गर्गसंहितायांविज्ञानखंडे
व्यासोग्रसेनसंवादेहरिमंदिरप्रतिष्ठावर्णनंनामषष्ठोध्यायः ॥ ६ ॥ श्रीवेदव्यासउवाच ॥ ॥ ब्राह्मेमुहूर्तेचोत्थायकशिपोश्चमुदा
नृप ॥ गुरोर्नामचगोविंदनामानिप्रवदन्मुहुः ॥ १ ॥ भूमिंनत्वान्यसेत्पादंजलंस्पृष्ट्वाहरेर्जनः ॥ उपविश्यासनेशीघ्रंसकामंयोयथा
सुखं ॥ २ ॥ हस्तावुत्संगआदायश्वासजित्प्राणमास्थितः ॥ ज्ञानमुद्राधरंशांतंश्रीगुरुंस्वस्तिकासनं ॥ ३ ॥ ध्यात्वाकृष्णंपरंध्या
येद्भक्तएकाग्रमानसः ॥ किशोरंश्यामलंहृद्यंवंशीवेत्रविभूषितं ॥ ४ ॥ एवंकृत्वाहरेध्यानंपुनर्गच्छेद्बहिःस्थलं ॥ तच्छौचंशृणुरा
जेंद्रगृहस्थस्ययथातथं ॥ ५ ॥ अश्वक्रांतेतिमंत्रेणमृत्स्नयाचजलेनच ॥ एकालिंगेगुदेतिस्रस्तथावामकरेदश ॥ ६ ॥ उभयोर्ह
स्तयोःसप्ततिस्रस्तिस्रःपदेपदे ॥ एतद्विद्विगुणंप्रोक्तंब्रह्मचारिवनस्थयोः ॥ ७ ॥ एतच्चतुर्गुणंप्रोक्तंयतीनांहरिसेविनां ॥ तदर्धंरो
गिपांथानांस्त्रीशूद्राणांतदर्धकं ॥ ८ ॥ शौचकर्मविहीनस्यसकलानिष्फलाःक्रियाः ॥ मुखशुद्धिविहीनस्यमंत्रानफलदाःस्मृताः ॥ 
॥ ९ ॥ आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते ॥ १० ॥ इतिमंत्रंसमुच्चार्यकुर्याद्वैदंतधा
वनम् ॥ हरितहयमंत्रेणसूर्यंनत्वाकृतांजलिः ॥ ११ ॥ प्रणमेद्धरिभक्तांश्चप्रल्हादादीन्समाहितः ॥ तुलसीमृत्तिकांनीत्वाततः

स्नानंसमाचरेत् ॥ १२ ॥ पठितव्यंप्रयत्नेनश्रीगंगायमुनाष्टकं ॥ अयोध्यामथुरामायाकाशीकांचीअवंतिका ॥ १३ ॥ पुरी
द्वारावतीचैवसप्तैतामोक्षदायिकाः ॥ शालिग्रामोमहायोगेशंभलोहरिमंदिरे ॥ १४ ॥ नंदिग्रामःकौशलेतुत्रयोग्रामाःप्रकीर्ति
ताः ॥ दंडकंसैंधवारण्यंजंबुमार्गंचपुष्कलं ॥ १५ ॥ उत्पलावर्तमारण्यंनैमिषंकुरुजांगलं ॥ अर्बुदंहेमवंतंचनवारण्यानिवै
विदुः ॥ १६ ॥ एतानितीर्थनामानिसमुच्चार्यःपुनःपुनः ॥ इत्थंस्नात्वाततोबिभ्रंदंबरंक्षौममुत्तमम् ॥ १७ ॥ द्वादशांस्तिल
कान्बिभ्रदष्टमुद्राधरःपरः ॥ कृतसंध्यःशुचिर्मौनीगत्वाश्रीकृष्णमंदिरं ॥ १८ ॥ घंटावाद्यंजयारावंतलशब्दंविधायच ॥
उत्तिष्ठोत्तिष्ठगोविंदयोगनिद्रांविहायच ॥ १९ ॥ उक्त्वापीमांस्मृतिंराजन्भक्तउत्थापयेद्धरिं ॥ मंगलार्तिंसमादायभ्रामयंस्त
न्मुखोपरि ॥ २० ॥ निवेद्यबहुपक्वान्नंनत्वानत्वापुनःपुनः ॥ ततःस्नानंकारयित्वादेशकालप्रभाववित् ॥ २१ ॥ शृंगारंभाववि
त्कृत्वावस्त्रभूषणमंगलैः ॥ आर्तिक्यंतुततःकृत्वाभोग्यान्नंचविधायच ॥ २२ ॥ ततोधृत्वामहाभोगंनानारसमयंपरं ॥ महाभोगा
र्तिकंकृत्वाकारयेच्छयनंहरेः ॥ २३ ॥ ततःप्रसादंपरमंतुलसीगंधमिश्रितं ॥ भुंजीतयोहरेर्नित्यंसकृतार्थोनसंशयः ॥ २४ ॥ रा
जभोगार्तिकंकृत्वाकारयेच्छयनंहरेः ॥ शंखनादेनविधिवद्भोगंधृत्वायथाविधि ॥ २५ ॥ ततःसंध्यार्तिकंकृत्वादुग्धादीन्विनिवेद्य
च ॥ ततःप्रदोषसमयेपुनरार्तिकमाचरेत् ॥ २६ ॥ धृत्वाभोगंपरंमिष्टंकारयेच्छयनंहरेः ॥ राजसीचैवराजेंद्रराजसेवेयमस्तिवै ॥
॥ २७ ॥ सर्वैश्रीकृष्णचंद्रस्यसेवासंलग्नमानसः ॥ तारयित्वाकुलशतंयातिचात्यंतिकंपदं ॥ २८ ॥ जन्माष्टमीचकृष्णस्यश्रीराम
नवमीतथा ॥ राधाष्टम्यन्नकूटंचद्वादशीवामनस्यच ॥ २९ ॥ चतुर्दशीनृसिंहस्यतथानंतचतुर्दशी ॥ एषुकालेषुकृष्णस्यमहापूजां
समाचरेत् ॥ ३० ॥ इतिश्रीमद्गर्गसंहितायांविज्ञानखंडेव्यासोग्रसेनसंवादेराजसेवावर्णनंनामसप्तमोऽध्यायः ॥ ७ ॥ ॥ व्या
सउवाच ॥ अथस्नात्वाचकृत्वाचनित्यनैमित्तिकींक्रियां ॥ पंचवर्णसमायुक्तंशुद्धेस्थंडिलमंडले ॥ १ ॥ द्वात्रिंशद्दलसंयुक्तकर्णिकाके

स्तरोज्ज्वलं ॥ विधायकमलंदिव्यंविधिवद्वेदसूक्तिभिः ॥ २ ॥ कर्णिकायांन्यसेद्राजन्हरेःसिंहासनंशुभं ॥ तत्रराधारमांस्थाप्यभूदे
वींविरजांतथा ॥ ३ ॥ तन्मध्येस्थापयेत्साक्षाच्छ्रीकृष्णंपुरुषोत्तमं ॥ तथाष्टदलमध्येतुराधिकाष्टसखीःशुभाः ॥ ४ ॥ ततोष्टदल
मध्येतुश्रीकृष्णस्यतथासखीन् ॥ तथाषोडशपर्णेषुसखीनांचद्वयंद्वयं ॥ ५ ॥ कमलस्यचपार्श्वेषुशंखंचक्रंगदांतथा ॥ पद्मंचनंदकं
शार्ङ्गंबाणांश्चमुसलंहलं ॥ ६ ॥ कौस्तुभंवनमालांचश्रीवत्संनीलमंबरं ॥ पीतांबरंतथावंशींवेत्रंचस्थापयेद्बुधः ॥ ७ ॥ ततःपार्श्वे
षुतालांकंगरुडांकंरथंतथा ॥ सुमतिंदारुकंसूतंगरुडंकुमुदंतथा ॥ ८ ॥ चंडंचैवप्रचंडंचबलंचैवमहाबलं ॥ कुमुदाक्षंबलंचैवस्थाप
येद्यत्नतःसुधीः ॥ ९ ॥ तथादिक्षुचदिक्पालान्संस्थाप्यचपृथक्पृथक् ॥ विष्वक्सेनंशिवंमां चविधिंदुर्गांविनायकं ॥ १० ॥ नव
ग्रहांश्चवरुणंतथाषोडशमातृकाः ॥ तत्पद्माग्रेवीतिहोत्रंस्थंडिलेस्थापयेद्बुधः ॥ ११ ॥ आवाहनमासनंचपाद्यमर्घ्यंविशेषतः ॥
स्नानंचमधुपर्कंचधूपंदीपंतथैवच ॥ १२ ॥ यज्ञोपवीतंवस्त्रंचभूषणंगंधमेवच ॥ पुष्पंतथाक्षतांश्चैवनैवेद्यंचमनोहरं ॥ १३ ॥ आ
चमनंप्रदातव्यंतांबूलंदक्षिणांतथा ॥ प्रदक्षिणांप्रार्थनांचतथानीराजनंस्मृतं ॥ १४ ॥ नमस्कारंततःकुर्यात्कर्मणाचपृथक्पृथक् ॥
आवाहनेतुपुष्पाणिआसनेतुकुशद्वयं ॥ १५ ॥ पाद्येश्यामांचदूर्वांचविष्णुक्रांतांतथैवच ॥ सौगंधिकानिपुष्पाणिअर्घ्येयोग्यानिया
दव ॥ १६ ॥ चंदनोशीरकर्पूरकुंकुमागुरुमिश्रितं ॥ एतादृशंजलंयोग्यंस्नानेराजन्महामते ॥ १७ ॥ मधुपर्केह्यामलकमरविंदंतथा
मतं ॥ धूपेगंधाष्टकंदेयंदीपेकर्पूरमेवच ॥ १८ ॥ यज्ञोपवीतंपीतंचवस्त्रेपीतांबरंमतं ॥ भूषणेचैवसौवर्णंगंधेकुंकुमचंदने ॥ १९ ॥
तुलसीमंजरीपुष्पेऽक्षतेषुस्युस्तुतंडुलाः ॥ नैवेद्येतुरसाःषट्चभोगानानाविधामताः ॥ २० ॥ जलेगंगाजलंयोग्यंयमुनाजलमेव
च ॥ जातीफलंचकंकोलमंतेआचमनेनृप ॥ २१ ॥ तांबूलेचोषणंत्वेलादक्षिणायांतुहाटकं ॥ प्रदक्षिणायांभ्रमणंघृतंनीराजनेगवां ॥ ६ ॥
॥ २२ ॥ प्रार्थनायांहरेर्भक्तिःप्रेमलक्षणसंयुता ॥ नमस्कारेमहाराजसाष्टांगनतविग्रहः ॥ २३ ॥ द्वादशाक्षरमंत्रेणशिखांबध्वाशु

चिःपुमान् ॥ उपचारान्पुरस्कृत्यश्रीमुखेसंमुखोभवेत् ॥ २४ ॥ इतिश्रीमद्गर्गसंहितायांविज्ञानखंडेव्यासोग्रसेनसंवादेमहापूजा
विधिवर्णनंनामाष्टमोऽध्यायः ॥ ८ ॥ ॥ श्रीव्यासउवाच ॥ उपचारस्यमंत्राणिवेदोक्तानिशुभानिच ॥ तुभ्यंवक्ष्यामिराजेंद्रशृ
णुष्वैकाग्रमानसः ॥ १ ॥ अथावाहनं ॥ गोलोकधामाधिपतेरमापतेगोविंददामोदरदीनवत्सल ॥ राधापतेमाधवसात्वतांपतेसिं
हासनेस्मिन्ममसंमुखेभव ॥ २ ॥ अथासनं ॥ श्रीपद्मरागस्फुरदूर्ध्वपृष्ठंमहार्हवैडूर्यखचितपदाब्जं ॥ वैकुंठवैकुंठपतेगृहाणपीतंत
डिद्धाटककुंभखंडं ॥ ३ ॥ अथपाद्यं ॥ परंस्थितंनिर्मलरौक्मपात्रेसमाहृतंबिंदुसरोवराद्धि ॥ योगेशवेदेशजगन्निवासगृहाणपाद्यं
प्रणमामिपादौ ॥ ४ ॥ अथस्नानं ॥ काश्मीरपाटीरविमिश्रितेनसुमल्लिकोशीरवताजलेन ॥ स्नानंकुरुत्वंयदुनाथदेवगोविंदगोपा
लकतीर्थपाद ॥ ५ ॥ अथमधुपर्कस्नानं ॥ मध्याह्नचंद्रार्कभवंमलापहंसितांगसंपर्कमनोहरंपरं ॥ गृहाणविष्णोमधुपर्कमेनंसंदृश्य
पीतांबरसात्वतांपते ॥ ६ ॥ अथवस्त्रं ॥ विभोसर्वतःप्रस्फुरत्प्रोज्ज्वलंचस्फुरद्रश्मिशून्यंपरंदुर्लभंच ॥ स्वतोनिर्मितंपद्मकिंजल्क
वर्णंगृहणांबरंदेवपीतांबराख्यं ॥ ७ ॥ अथयज्ञोपवीतं ॥ सुवर्णाभमापीतवर्णंसुमंत्रैःपरंप्रोक्षितंवेदविन्निर्मितंच ॥ शुभंपंचकार्येषु
नैमित्तिकेषुप्रभोयज्ञयज्ञोपवीतंगृहाण ॥ ८ ॥ अथभूषणम् ॥ कनकरत्नमयंमयनिर्मितंमदनरुक्कदनंसदनंरुचां ॥ उषसिपूषसुव
र्णविभूषणंसकललोकविभूषणगृह्यतां ॥ ९ ॥ अथगंधम् ॥ संध्येंदुशोभंबहुमंगलंश्रीकाश्मीरपाटीरकपंकपृक्तम् ॥ स्वमंडनंगन्ध
चयंगृहाणसमस्तभूमंडलभारहारिन् ॥ १० ॥ अथाक्षतान् ॥ ब्रह्मावर्तेब्रह्मणापूर्वमुप्तानब्राह्मैस्तोयैःसिंचितान्विष्णुनाच ॥
रुद्रेणाराद्रक्षितात्राक्षसेभ्यःसाक्षाद्भूमन्नक्षतांस्त्वंगृहाण ॥ ११ ॥ अथपुष्पाणि ॥ मंदारकंजातकपारिजातकल्पद्रुमश्रीहरिचंद
नानाम् ॥ गृहाणपुष्पाणिहरेतुलस्यामिश्राणिसाक्षान्नवमंजरीभिः ॥ १२ ॥ अथधूपम् ॥ लवंगपाटीरजचूर्णमिश्रंमनुष्यदेवा
सुरसौख्यदंच ॥ सद्यःसुगंधीकृतहर्म्यदेशंद्वारावतीभूपगृहाणधूपम् ॥ १३ ॥ अथदीपम् ॥ तमोहारिणंज्ञानमूर्तिंमनोज्ञं

ग. सं. लसद्वर्तिकर्पूरपूरंगवाज्यं ॥ जगन्नाथदेवप्रभोविश्वदीपस्फुरज्जोतिषंदीपमुख्यंगृहाण ॥ १४ ॥ अथनैवेद्यं ॥ रसैःशरैर्भेदविधिव्य वि. ९
वस्थितंरसैरसान्यंचयशोमतीकृतं ॥ गृहाणनैवेद्यमिदंसुरोचिकंगव्यामृतंसुंदरनंदनंदन ॥ १५ ॥ अथजलं ॥ गंगोत्तरीवेगबला
॥ ७ ॥ त्समुद्भूतंसुवर्णपात्रेणहिमांशुशीतलं ॥ सुनिर्मलाभंह्यमृतोपमंजलंगृहाणराधावरभक्तवत्सल ॥ १६ ॥ अथाचमनं ॥ राधापते अ. ९
श्रीविरजापतेप्रभोश्रियःपतेसर्वपतेचभूपते ॥ कंकोलजातीफलपुष्पवासितंपरंगृहाणाचमनंदयानिधे ॥ १७ ॥ अथतांबूलम् ॥
जातीफलैलासुलवंगनागवल्लीदलैःपूगफलैश्चसंयुतं ॥ मुक्तासुधाखादिरसारयुक्तंगृहाणतांबूलमिदंरमेश ॥ १८ ॥ अथदक्षिणा ॥
नाकपालवसुपालमौलिभिर्वंदितांघ्रियुगुलप्रभोहरे ॥ दक्षिणांपरिगृहाणमाधवलोकदक्षवरदक्षिणायते ॥ १९ ॥ अथनीराजनं ॥
प्रस्फुरत्परमदीप्तिमंगलंगोवृताक्तनवपंचवर्तिकं ॥ आर्तिकंपरिगृहाणचार्त्तिहन्पुण्यकीर्तिविशदीकृतावने ॥ २० ॥ अथनम
स्कारः ॥ नमोस्त्वनंतायसहस्रमूर्तयेसहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्नेपुरुषायशाश्वतेसहस्रकोटीयुगधारिणेनमः॥२१॥
अथप्रदक्षिणा ॥ समस्ततीर्थयज्ञदानपूर्तकादिजंफलं ॥ लभेत्परस्यशाश्वतंकरोतियःप्रदक्षिणाः ॥२२॥ अथप्रार्थना ॥ हरेमत्स
मःपातकीनास्तिभूमौतथात्वत्समोनास्तिपापापहारी ॥ इतित्वंचमत्वाजगन्नाथदेवयथेच्छाभवेत्तेतथामांकुरुत्वं ॥ २३ ॥ अथ
स्तुतिः ॥ संज्ञानमात्रंसदसत्परंमहच्छश्वत्प्रशांतंविभवंसमंमहत् ॥ त्वांब्रह्मवंदेहिसुदुर्गमंपरंसदात्वधाम्नापरिभूतकैतवम् ॥
॥ २४ ॥ एवंसंपूज्यदेवेशमेभिर्मंत्रैर्महामते ॥ प्रणम्यविष्णुंसर्वांगपूजांकुर्यात्प्रयत्नतः ॥ २५ ॥ ॐनमोनारायणायपुरुषायमहा
त्मने ॥ विशुद्धसत्वधीस्थायमहाहंसायधीमहि॥२६॥इतिमंत्रेणप्राणायामंकृत्वा ॥ ॐविष्णवेमधुसूदनायवामनायत्रिविक्रमायश्री ॥ ७ ॥
धरायहृषीकेशायपद्मनाभायदामोदरायसंकर्षणायवासुदेवायप्रद्युम्नायअनिरुद्धायअधोक्षजायपुरुषोत्तमायश्रीकृष्णायनमः॥इति
पादगुल्फजानूरुकट्युदरपृष्ठभुजाकंधरकर्णनासिकाधरनेत्रशिरस्सुपृथक्पृथक्पूजयामीतिसर्वांगपूजांकुर्यात् ॥ तथासखीसखंशंख

चक्रगदापद्मासिधनुर्बाणहलमुसलादीन्तथाकौस्तुभवनमालाश्रीवत्सपीतांबरनीलांबरवंशीवेत्रादीन्तथातालांकगरुडांकरथदा
रुकसुमतिसारथिगरुडकुमुदनंदसुनंदचंडमहाबलकुमुदाक्षादीन् ॥ प्रणवपूर्वेणचतुर्थ्यंतेननमःसंयुक्तेननाम्नातथाविष्वक्सेन
शिवविधिदुर्गाविनायकदिक्पालवरुणनवग्रहमातृकादीन्मंत्रैःपूजयेत ॥ ॐनमोवासुदेवायनमःसंकर्षणायच ॥ प्रद्युम्नाया
निरुद्धायसात्वतांपतयेनमः ॥ २७ ॥ इतिमंत्रेणशतमाहुतीर्जुहुयात् ॥ देवंप्रदक्षिणीकृत्यमहाभोगंनिधायच ॥ प्रणमेद्दंडवद्भू
मौमंत्रमेतमुदीरयेत ॥ २८ ॥ ध्येयंसदापरिभवघ्नमभीष्टदोहंतीर्थास्पदंशिवविरिंचिनुतंशरण्यम् ॥ भृत्यार्तिहन्प्रणतपालभवाब्धि
पोतंवंदेमहापुरुषतेचरणारविंदम् ॥ २९ ॥ इतिनत्वाहरिंराजन्पुनर्नीराजनंहरेः ॥ कारयेद्विधिवद्भक्तोहरिभक्तजनैःसह ॥ ३० ॥
घटीवाद्यरणद्घंटाकांस्यवीणादिकीचकैः ॥ करतालमृदंगाद्यैःकीर्तनंकारयेद्बुधः ॥ ३१ ॥ नृत्यंतिश्रीहरेरग्रेभक्तावैप्रेमविह्वलाः ॥
जयध्वनिसमायुक्ताःसत्कथागानतत्पराः ॥ ३२ ॥ पुनःप्रभुंनमस्कृत्यमंदिरेतपनोज्ज्वले ॥ शयनंकारयेत्सम्यक्श्रीकृष्णस्यमहा
त्मनः ॥ ३३ ॥ एवंकरोतिश्रीकृष्णसेवांयोलग्नमानसः ॥ प्रणमंतिचतंराजन्देवताःस्वर्गसंभवाः ॥ ३४ ॥ सोपिराजेंद्रनाकेपिपदं
धृत्वाहरेर्जनः ॥ अंतेयातिपरंधामगोलोकंयोगिदुर्लभं ॥ ३५ ॥ इतिश्रीकृष्णसेवायाविधानंवर्णितंमया ॥ चतुःपदार्थदंनृणांकिं
भूयःश्रोतुमिच्छसि ॥ ३६ ॥ इतिश्रीमद्गर्गसंहितायांविज्ञानखंडेव्यासोग्रसेनसंवादेनवमोऽध्यायः॥९॥ ॥उग्रसेनउवाच ॥
सिद्धोस्म्यनुगृहीतोस्मित्वयाश्रीकृष्णरूपिणा ॥ श्रीकृष्णपद्धतिःसाक्षाच्छ्रुतावैविधिवन्मया ॥१॥ अहोलोकामहामूढालोभमोह
मदान्विताः ॥ नाप्नुवंतिहिवैराग्यंभजंतिनहरिंक्वचित् ॥ २ ॥ भगवन्नस्यजगतोमोहकारणमद्भुतं ॥ कथंजातंवदविभोकथमेतन्निव
र्तते ॥ ३ ॥व्यासउवाच ॥ यथांभसिप्राप्तमदोविधोःखतस्तत्प्रेक्षतेकेवलमेववेगतः ॥ तथाहिबिंबःपरमस्यमाययाममेत्यहंभागवते
प्रवर्तते॥४॥प्रधानकालाशयदेहजैर्गुणैःकुर्वन्विकर्माणिजनोनिबद्ध्यते॥काचेभकंसैकतएवजीवनंगुणेचसर्पंप्रतनोतिसोक्षिभिः॥५॥

ग. सं. राजन्जगन्मोहमयंरजोमयंतमोमयंसत्वमयंतथाक्वचित् ॥मनोविलासंविकृतंचविभ्रमंविद्ध्याधिदंलोलमलातचक्रवत्॥ ६॥इदंक वि. ९
रिष्यामिकरोम्यभूवंममेदमस्तीतिचवेदमाब्रुवन्॥ अहंसुखीदुःखयुतःसुहृज्जनोलोकस्त्वहंकारविमोहितोमतः॥ ७॥उग्रसेनउवाच ॥ अ. १०
॥ ८ ॥ वदमेकृपयाब्रह्मल्लक्षणपरमात्मनः ॥ कतिधाकवयःकृष्णंवदंतिजयवर्त्मनि ॥ ८ ॥ सनातनस्यात्रनमृत्युजन्मननिशोकमोहौनज
रायुवादयः ॥ अहंमदोव्याधियुतोभयंसुखंशुचोक्षुधेच्छानरतिर्नचाधयः ॥ ९ ॥ आत्मानिरीहोह्यतनुःससर्वगोनाहंकृतिःशुद्धब
लोगुणाश्रयः ॥ स्वयंपरोनिष्फलआत्ममंगलोज्ञानात्मकोयोविदितोमुनीश्वरैः ॥ १० ॥ जागर्तियोस्मिञ्छयनंगतेसतिनायंजनो
वेदसवेदतंहितं ॥ पश्यंतमाद्यंपुरुषंहियंजनोनपश्यतिस्वक्षमलंचतंभजे॥ ११ ॥यथानभोग्निःपवनोनसज्जतेघटेनकाष्ठेनरजोभिरावृ
तः ॥ तथापुमान्सर्वगुणैश्चनिर्मलोवर्णैर्यथास्यात्स्फटिकोमदोज्ज्वलः ॥ १२ ॥ व्यंगेनवालक्षणयाचवाक्पथैरर्थैःपदस्फोटपराय
णैःपरं॥नज्ञायतेतद्ध्वनिनोत्तमेनसद्वाच्यंततोब्रह्मकुतस्तुलौकिकैः ॥१ ३॥ वदंतिकेचिद्ध्रुविकर्मकर्तृयत्कालंचकेचित्परमेवशोभनम् ॥
केचिद्विचारंप्रवदन्तियच्चतद्ब्रह्मेतिवेदांतविदोवदंतिहि ॥ १४ ॥ यंनस्पृशंतीहगुणानकालजामायेंद्रियंचित्तमनोनबुद्धयः ॥ मह
न्नवेदोवदतीतितत्परंविशंतिसर्वेनलविस्फुलिंगवत् ॥ १५ ॥ हिरण्यगर्भःपरमात्मतत्वंयद्वासुदेवंप्रवदंतिसंतः ॥ विचार्य्यतद्देवव
रस्वरूपंविसृज्यमोहंविचरेदसंगः ॥ १६ ॥ यथेंदुरेकोजलपात्रवृंदगोयथाग्निरेकोविदितःसमिच्चये ॥ तथापरात्माभगवाननेक
विदंतर्बहिःस्यात्स्वकृतेषुदेहिषु ॥ १७ ॥ सूर्योदयोनैशतमोविलीयतेप्रदृश्यतेवस्तुगृहेयथाजनैः ॥ ज्ञानोदयेज्ञानतमःप्रलीयते
संप्राप्यतेब्रह्मपरंतनौतथा ॥ १८ ॥ यथेंद्रियाणांचपृथक्प्रवृत्तिभिर्नानेर्यतेर्थोतिगुणाश्रयःपरः ॥ एकंह्यनंतस्यपरस्यधामतत्त ॥ ८ ॥
थामुनीनांकिलशास्त्रधर्मभिः ॥ १९ ॥ साक्षाद्धरिर्यःपुरुषोत्तमोत्तमःश्रीकृष्णचंद्रोनिजभक्तवत्सलः ॥ कैवल्यनाथोनृगमुज्जहार
तंपूर्णस्वयंब्रह्मपरंनमाम्यहम् ॥ २० ॥ श्रीनारदउवाच ॥ इत्युक्त्वातमनुज्ञाप्यभगवान्बादरायणः ॥ पश्यतांयादवानांचतत्रै

वांतरधीयत ॥ २१ ॥ इदंमयातेकथितंहरिभक्तिविवर्द्धनं ॥ विज्ञानखंडंविशदंश्रोतृणांमोक्षदंस्मृतं ॥ २२ ॥ गर्गाचार्येणकथि
तानाम्नेयंगर्गसंहिता ॥ सर्वदोषहरापुण्याचतुर्वर्गफलप्रदा ॥ २३ ॥ गोलोकवृंदावनयोर्गिरीश्वरमाधुर्ययोः श्रीमथुरापुरस्यच ॥
द्वारावतीविश्वजितोर्हलायुधविज्ञानयोःखंडचयाःपृथङ्नव ॥ २४ ॥ श्रीकृष्णमूर्तिःपरमैरसैर्यथायथाचभूमिर्भरतादिभिर्भृशं ॥
तथाहिशश्वन्मुनिगर्गसंहिताविभातिखंडैर्नवभिर्नृपेश्वर ॥ २५ ॥ यथाहिरत्नैर्नवभिर्विराजतेदेवांगुलौतप्तसुवर्णमुद्रिका ॥ तथा
चतुर्वर्गफलप्रदेविधौसर्गैर्विसर्गैर्मुनिगर्गसंहिता ॥ २६ ॥ नरेंद्रशश्वन्मुनिसंहितांयेशृण्वंतिभक्तयाहिजनाःपुनीताः ॥ इहैवसौ
ख्यंपरमाप्नुवंतस्ततस्तुगोलोकपुरंप्रयांति ॥ २७ ॥ कृत्वाथपीतांबरवंदनंत्विमांशृणोतिवंध्याबहुलालसाभृशं ॥ ह्रस्वेनकालेनगृ
हांगणेशिशून्संचारयंतीविचरत्यहर्निशं ॥ २८ ॥ रोगीपुमान्रोगगणात्प्रमुच्यतेभीतोभयाद्बंधगतश्चबंधनात् ॥ श्रुत्वाकथांनि
र्धनएतिवैभवंमूर्खोभवेत्पंडितएवसत्वरं ॥ २९ ॥ यःकार्तिकेमासिनृपःश्रियायुतःशृणोतिशश्वन्मुनिगर्गसंहितां ॥ सचक्रवर्तीभवि
तानसंशयोनरेंद्रहस्तोद्धृतचारुपादुकः ॥ ३० ॥ मनोजवैःसिंधुतुरंगमैर्नवैर्द्विपैश्चविंध्याचलसंभवैःपरैः ॥ वैतालिकोद्गीतयशामही
तलेनिषेवितोवारवधूजनैःसह ॥ ३१ ॥ सुवर्णशृंगांबरताम्रपृष्ठंसभूषणंरौप्यखुरंसवत्सं ॥ ददातिखंडंप्रतिगोद्वयंयःप्राप्नोतिसर्वं
हिमनोरथंसः ॥ ३२ ॥ निष्कारणोसौशृणुतेविदेहराट्सर्वामिमांवैमुनिगर्गसंहितां ॥ हृत्पुंडरीकेवसतेस्यसर्वदाश्रीकृष्णचंद्रोनिज
भक्तवत्सलः ॥ ३३ ॥ श्रीगर्गउवाच ॥ इत्युक्त्वातमनुज्ञाप्यनारदोदेवदर्शनः ॥ सर्वेषांपश्यतांब्रह्मन्नंबरंगतवान्मुनिः ॥ ३४ ॥
बहुलाश्वोमहाराजःश्रीकृष्णेलग्नमानसः ॥ सर्वतस्तुकृतार्थोभूच्छ्रुत्वेमांसंहितांहरेः ॥ ३५ ॥ तवप्रश्नोपरिब्रह्मन्कथितासंहिताम
या ॥ श्रुतावापाठिताकैश्चित्कोटियज्ञफलप्रदा ॥ ३६ ॥ श्रीशौनकउवाच ॥ धन्योहंचकृतार्थोहंत्वत्संगेनमहामुने ॥ प्राप्नोमिप
रमांभक्तिंश्रीकृष्णप्रेमवर्द्धिनीं ॥ ३७ ॥ विशदहृदिमुनीनांमानसेराजहंसःसकलसुखविराजन्नादमाधुर्यवंशः ॥ जगतिविकलदं

शः शूरवंशावतंसः करबलहतकंसः पातुवःसत्प्रशंसः ॥ ३८ ॥ इत्युक्त्वातान्मुनीन्सर्वान्गर्गाचार्योमहामुनिः ॥ अनुज्ञाप्यप्रसन्ना 
त्मागंतुमभ्युद्यतोभवत् ॥ ३९ ॥ नवसर्गविसर्गाढ्यांस्वर्गभृद्गर्गसंहितां ॥ चतुर्वर्गप्रदामुक्त्वागर्गोगर्गाचलंययौ ॥ ४० ॥ शर 
 द्विकचपंकजश्रियमतीवविद्वेषकंमिलिंदमुनिलेढितंकुलिशकंजचिह्नावृतम् ॥ स्फुरत्कनकनूपुरंदलितभक्ततापत्रयंचलद्द्युतिपदद्वयं
हृदिदधामिराधापतेः ॥ ४१ ॥ इतिश्रीमद्गर्गसंहितायांविज्ञानखंडेश्रीनारदबहुलाश्वसंवादांतर्गतव्यासोग्रसेनसंवादेपरमब्रह्मनि
रूपणंनामदशमोऽध्यायः ॥ १० ॥ छ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ इतिविज्ञानखंडंसमाप्तम् ॥ ॥ छ ॥
॥ इति विज्ञानखंडं समाप्तम् ॥



# श्रीलघुशिवपुराण-भाषाटीका.

इस ग्रंथके रचयिता महात्मा श्रीवेदव्यासजीने अपनी " लघ्वीगुर्वर्थगह्वरा " अर्थात् अल्पाक्षरा अर्थबहुला वाणीके असाधारण वैदग्ध्यसे इस छोटेसे ग्रंथमें चतुर्विंशति सहस्र संख्यात्मक " महाशिवपुराण " के समस्तविषयोंका समदृष्टिरूपसे निरूपण करके " गागरमें सागर " के दृश्यका पूर्ण परिचय दिया है. यद्यपि उसका यावत् विवरण लिखनेके लिये हमारी लेखनी सर्वथा असमर्थ है. तथापि दृष्टिगोचर होनेपर अनुभवी महाशय स्वयं अनुभव कर लेंगे. किंतु संस्कृत मूलमात्र होनेके कारण सर्वसाधारणको इसके लाभोंसे वंचित रहना पड़ताथा. अत एव संसारतापसंतप्त सर्व जनसमूहको इस वसुधातलवर्ति सुधासागरकी सुगमतया संप्राप्ति होनेके लिये सुमेरपुरनिवासी–श्रीपं०–मथुराप्रसादशर्माने इसपर सुजनमनोरंजनी टीकाकी लावण्यमयी रचना कर सरल सोपानमार्गके मनोहर दृश्यको यथावत् प्रस्तुत किया है. इस प्रकारकी परमोपयुक्त भाषाटीकायुक्त इस पुस्तको हमने सुमेरपुरनिवासी शास्त्री रघुवंशशर्मासे समूल शोधन कराके सुपुष्ट सचिक्कण कागजपर सुवाच्य शीशाक्षरोंमें छापकर विक्रयार्थ प्रस्तुत किया है. परंतु हम अपनेको कृतकार्य तभी मानेंगे, जब कि हमारे अनुग्राहक ग्राहकगण इसको ग्रहणकर इसके अवलोकनद्वारा ऐहिक व आमुष्मिक सुखोंका सम्यक्तया सम्पादन करेंगे. यद्यपि ऐसे अमूल्य ग्रंथका मूल्य जो कुछ होय, किंतु थोड़ाही है. तथापि धनी निर्धनी सबहीको इसका अनुपम लाभ होनेके लिये बहुत कम अर्थात् केवल १ रु. ट. ख. ६ आ. रक्खाहै.

पुस्तक मिलनेका ठिकाना.

## हरिप्रसाद भगीरथजीका-

पुस्तकालय–कालकादेवीरोड़ रामवाड़ी, मुम्बई.

## हनुमानदास ब्रजवल्लभजीका पुस्तकालय

ठि० चौक–कानपूर.

